स्यात्, क्रियाफलस्य विक्लेदनस्य कर्मगतत्वात्, नैवम्; कर्म-गतत्वेऽपि क्रियाफलस्य प्रयोजनस्य कर्त्रभिप्रेतत्वात्। नन्वत्रोपने-यासत्तिरूपं क्रियाफलं कर्त्रभिप्रेतम्; तस्य कर्मणोऽध्ययनेऽस्त्युपयोगः, कर्तुरध्यापने, नैवम्; आसत्तिरूपस्य क्रियाफलत्वाभावात्; साङ्गोप-नयने कृते यन्माणवकगतं तत् संस्काराख्यं फलम् नासत्तिरूपम्, तस्य लौकिकोपनयनेनापि समानत्वात्। एवं च क्रियाफलमकर्त्रभिप्रेत-मेवेति स्वरितञितसूत्रस्याविषयत्वात् सम्माननसूत्रारम्भः सार्थक इति सिद्धमात्मनेपदादध्युपनयनस्याध्यापनाङ्गत्वम् ॥

इति नन्दीश्वरस्य प्रभाकर विजये प्रयुक्तिनिर्णयाख्यं प्रकरणम् समाप्तम्

---



## (२) वक्तृज्ञानानुमानताप्रकरणम् ।

* सम्प्रति पौरुषेयवाक्यानां वक्तृज्ञानानुमानव्यवधानेनैवार्थप्रतिपादकत्वमिति प्रतिपाद्यते । व्युत्पन्नशब्दश्रवणमात्रादर्थप्रतीतिः किमिति

---

* अध्ययनस्याध्यापनविधिप्रयुक्तत्वव्यवस्थापनेनाथातो धर्मजिज्ञासेति सूत्रार्थः संगृहीतो भवति । अयं भावः—अध्यापनविधिप्रयुक्तमध्ययनं अर्थज्ञान फलमुत स्वर्गफलकमिति संशये स्वर्गफलकमित्येव युक्तम्; अर्थज्ञान फलकस्यार्थज्ञान प्रयुक्तत्वेनाध्यापनविधिप्रयुक्तत्वायोगात् इति पूर्वपक्षः । सिद्धान्तस्तु—यद्यपि लोकतः प्रवृत्तिरथ ज्ञानार्थाध्ययने संभवति; परन्तु न नियमेन वेदाध्ययन एव प्रवृत्तिः संभवति । भाषान्तराध्ययनादावपि प्रवृत्तिसंभवात् । तत्र च पौरुषेयत्वेन वाक्यस्य तस्यानुमानविधयैव प्रामाण्यात् न धर्मनिर्णयः स्यादिति वेदाध्ययन एव प्रवृत्तिं नियमयितुमथातो धर्मजिज्ञासेति सूत्रमिति ।

तदुक्तं प्रकरणपञ्चिकायाम्—ननु स्वाध्यायोऽध्येतव्य इति नियोगसिद्धेरवगमात्तन्निष्पत्त्यर्थत्वादध्यापनस्यान्यपरत्वादर्थविवक्षा दुर्भणैव, मैवम्, यदि केवलं नियोगनिष्पत्त्यर्थतैवाध्ययनस्य स्यात्, स्यादेतदेवम्, यदा त्वर्थावबोधोऽपि प्रयोजनतया स्वीक्रियते, तदार्थपरताऽप्यस्तीति नाविवक्षितार्थता, कथं पुनरेकस्मिन् वाक्ये प्रयोजनद्वयम्? उच्यते, शाब्दं नियोगनिष्पत्तिरेव प्रयोजनम्, आर्थं त्वर्थावबोधनमिति न विरोधः । यच्च तदर्थावबोधाख्यं प्रयोजनं तच्च केवलाध्ययनसाध्यमिति अध्ययनविधिरेव स्वप्रयोजनसिद्धये विचारमाक्षिपति, विचारस्य च न्यायनिबन्धनत्वान्न्यायानां मीमांसाज्ञानगम्यत्वान्मीमांसाज्ञानस्य गुर्वायत्तत्वान्न वेदाध्ययनानन्तरं गुरुकुलान्निवर्तितव्यमिति मन्यमानो भगवान्सूत्रकारः पूर्वपक्षनयमूलतां स्मृतेर्दर्शयितुं धर्मजिज्ञासोपदेशमुखेनाध्ययनानन्तरभाविनीं गुरुकुलनिवृत्तिं प्रतिषेधन्निदमाह—"अथातो धर्मजिज्ञासा" इति । वेदवाक्यार्थविचारविरोधिनी च गुरुकुलनिवृत्तिः

जायत इति चेन्न; व्युत्पन्नशब्दोच्चारणेऽपि वक्तुरभिप्रायानिश्चयेऽर्थाभिधानादर्शनात्तात्पर्यज्ञानमपि सामग्रीत्वेन कल्प्यते। * तात्पर्यज्ञानं चेममर्थमवगम्यैतत्प्रतिपादनायेदं वाक्यमुच्चारितम् इत्यनुसन्धानम्। अतश्च प्रामणान्तरान्तर्भावः।

---

रेव केवला निवार्यते, न सकलेतरभिक्षाचरणब्रह्मचर्यादिधर्मनिवृत्तिः, असमाप्तसकलब्रह्मचारिनियमश्च न स्नातक इति न दाराधिगमनेऽधिक्रियते; स्नातकस्य दाराधिगमस्मरणात्-"स्नातकः सदृशीं भार्यां विन्देदि"ति। तस्माद् गुरुकुले स्थित्वा सकलेतरब्रह्मचारिधर्मान् परित्यज्य वेदार्थो विचारयितव्यः, अविचारितस्यानिर्णीयमानत्वात्, अनिर्णीतवेदार्थश्चेद् गुरुकुलान्निवर्तेत, ततः कृतदारसंग्रहः श्रौताग्निहोत्रादिनित्यनैमित्तिकधर्माधिकारापातात्तदनुष्ठानं कर्तुमसमर्थः प्रत्यवेयात्, तस्मादध्ययनस्यानन्तरमेव वेदार्थो विचारयितव्य इति विचारोपायभूतन्यायनिबन्धनं मीमांसाशास्त्रमारब्धव्यमिति सिद्धम्।

अत्र भाट्टमतेऽपि अर्थज्ञानार्थमध्ययनमिति सिद्धान्तः समान एव; इयान् विशेषः—भाट्टमते लौकिकवाक्यानामपि वेदवाक्यानामिवानुमानविधया प्रामाण्यस्यास्वीकरणात् स्वरूपेणैव प्रामाण्यस्वीकारात् भाषान्तरादिभिरधिगतधर्मतत्त्वस्यापि क्रतुष्वधिकारापत्तिरित्यपशूद्राधिकरणविरोधः, प्रभाकरमते तु लौकिकवाक्यानामनुमानविधयैव प्रामाण्यात् वेदानधिकारिणां च धर्मतत्त्वनिर्णस्य वेदमूलकस्यासंभवात् नाधिकार इति फलविशेषो वर्तत एवेति सूचयन्ननुमानविधयैव लौकिकवाक्यानां प्रामाण्यमित्याह—संप्रतीति।

* अनुविधया प्रामाण्यं नाम वक्तृज्ञानरूपतात्पर्यानुसन्धानद्वारा प्रामाण्यमेवेति स्पष्टं मूल एव विवेचितम्। एवं च वेदवाक्यप्रामाण्यमपि तात्पर्यानुमानद्वारेति कल्पनं यद्यप्यपेक्षितम्, तथाऽपि वेदतात्पर्यस्य वक्तृज्ञानरूपत्वाभावात् न वक्तृज्ञानानुमानाधीनं प्रामाण्यमिति तु विशेषः। एवं च चेदनैव धर्मे प्रमाणमिति नियमोऽत्र

ननु अस्तु वाक्यमात्रादनभिधानम्, आप्तवाक्यस्य दोषरहितस्यार्थावबोधकत्वं किमिति नाश्रीयते? नैवम्; आशयादिदोषराहित्यमेवाप्तत्वम्; तथा भूतस्याप्यन्यपरप्रयोगो दृश्यते, यथा—विषं भुङ्क्ष्व इत्यादौ भोजननिवृत्तिपरे वाक्ये; अतः प्रमाणान्तरेणावगते तात्पर्येऽर्थनिश्चयः तात्पर्यनिश्चयादर्थनिश्चयः; तात्पर्यनिश्चयश्च वक्तृज्ञानानुमानद्वारेणैव भवतीति आप्तवाक्यस्यैव लिङ्गत्वमुपपन्नम्; विषभक्षणवाक्येऽपि योग्यार्थज्ञानपूर्वकत्वाव्यभिचारात्।

ननु कथं ज्ञानमनुमीयते? न तावद् ज्ञानमात्रस्यानुमानम्; ज्ञानमात्रविशेषनिश्चयाभावादेवानुमानवैयर्थ्यं स्यात्, न तावद्विशिष्टज्ञानानुमानम्; अर्थेनैव ज्ञानस्य विशेषः, नान्येन; अतोऽर्थनिश्चयेन विशिष्टज्ञानानुमानम्; निश्चये चानुमानवैयर्थ्यमेवेति कथं वक्तृज्ञानानुमानम्? नैवम्; वाक्यश्रवणे सत्यभिधानात् प्रागेव पदैः पदार्थाः स्मर्यन्ते; स्मृतानां च पदार्थानाम् एवमन्वेतुं योग्यम् नैवम् इति विमर्शः संजायते; अतो न्यायसंपादितेन विमर्शेन विशिष्टोऽर्थो बुद्धिस्थः, तेनैव विशिष्टज्ञानानुमानम्। ननु विमर्शो नाम कीदृशः? स च प्रमाणमप्रमाणं वेत्यपि न विद्मः, उच्यते—विमर्शस्तावदभिधानात् प्रागेव भवद्भिरप्यङ्गीकृतः; इतरथा अभिहितैः पदार्थैः विशिष्टोऽर्थो ज्ञातुं न शक्यते; पदार्थानामनेकार्थसाधरणत्वात् कस्य विशिष्टार्थस्य गमका भवेयुः? आकांक्षासन्निधियोग्यतायुक्तार्थस्य गमका इति चेत्, तर्हि स एव विमर्शशब्दार्थो युष्माभिरप्यङ्गीकृतः। सच प्रमाणेतिकर्तव्यतारूपः; न प्रमाणमात्रम्, नच स्मृतिमात्रं वा; विमर्शानङ्गीकारे च प्रत्यधिकरणं पूर्वपक्षसिद्धान्तवचनव्यक्तिविमर्शो न स्यात्।

* केचित्तु—विसंवादशङ्कया तिरोहितत्वादर्थनिश्चयो न जायते, "पुंवाक्ये तु विसंवादशङ्कया सा तिरोहिता" इत्युक्तत्वादित्याहुः,

---

व्यवस्थापितो भवति। यत्र हि वक्तृज्ञानानुमानद्वारा प्रामाण्यं तत्रैव हि प्रमाणताऽप्रमाणता च दृश्यते, नान्यत्रेति न दोषः।

* इदमेव मतं प्रकरणपञ्चिकायां नीतिपथे निरूपितम्। तद्यथा:—

तदयुक्तम्; अभिधानसामग्रीसंभवे सति संशयस्याप्रतिबन्धकत्वात्। इतरथा काकनिलयन ? (फलनिर्णय ) सद्भावेऽपि प्रतिबन्धकत्वप्रसङ्गः; अनुमाननिश्चये च प्रसङ्गस्तुल्यः; अतः सामग्र्यभावादेवानभिधानम्।

नन्वेवं व्यवहारावसितशक्तिबाधः; पौरुषेयवाक्येभ्यो हि व्युत्पत्तिः, वाक्यं च नाभिधायकम्, लिङ्गमेवेत्युक्तम्, नैवम्;* शक्ति-

---

पदानां तत्पदार्थेषु शक्तिः स्वाभाविकी स्थिता।
पुंवाक्येषु विसंवाद शङ्कया सा तिरोहिता॥
वेदेषु त्वस्मर्यमाणकर्तृकेषु स्वरूपतः।
प्रमाणान्तरसंस्पर्शरहितार्थावबोधिषु॥
न कर्तुरनुमानं स्याद्वाक्यत्वादिति लिङ्गतः॥ इति॥

* अयं भावः—शब्दश्रवणसमनन्तरभाविनीं प्रयोज्यवृद्धस्य चेष्टामुपलभ्य विशिष्टार्थविषया प्रतीतिस्तस्य कल्प्यते। सा च शब्दानन्तर्यात्तत्कारणिकैवेति शब्दस्य तद्वाचकताशक्तिः कल्प्यते। पश्चात्तु कस्य चिद्यथार्थपदरचनामुपलभ्य कथं व्यभिचारिणो वाक्यात्प्रयोज्यवृद्धस्यार्थनिश्चयः संजात इति विचिकित्स्यैवमवधारयति। नूनमनेनैवायं वक्तैवमवधारितः नायमनन्वितार्थानि पदानि प्रयुङ्क्ते। तेन नूनमेतेनैषामन्वयो ज्ञात इति ज्ञानानुमानपुरःसरमर्थं निश्चितवानिति कल्पयति। पूर्वावगतन्तु वाचकत्वं न मिथ्या मन्यते। तस्मादस्ति वाचकत्वमिति।

एतेन—न हि प्रयोज्यवृद्धस्य शब्दानन्तरभाविनी प्रतिपत्तिः शब्दजन्या,यत्तस्य शक्तिं कल्पयेत्। शब्दानुमितवाक्तृज्ञानलिंगजन्यत्वात्। न चान्यतो निष्पन्नं कार्यमन्यस्य शक्तिं कल्पयति;अतिप्रसंगात्। यद्यपि च तस्यामवस्थायामजन्यत्वानवधारणाच्छब्दानन्तर्याच्छब्दजन्यत्व भ्रान्त्या ऽवगम्य शब्दस्य शक्तिर्भ्रान्त्या ऽवगम्यते; तथाऽपि पश्चाद् तज्जन्यत्वमवगत्य तज्जन्यत्वभ्रान्तौ निवृत्तायां शक्तिभ्रान्तिरपि निवर्तिष्यतएव। धूमायमानबाष्पनितधूमध्वजविज्ञानवत्। तद्धि स्वरूपेणाबाधतमपि लिंगबाधादेव निवर्तते, तथा शब्दस्यापि वाचकत्वकल्पना!

विषये (न) व्यभिचाराशङ्का; लिङ्गे न चोत्तरकालेऽर्थनिश्चयश्च । अतो वक्तृज्ञानानुमानद्वारेणैवार्थनिश्चय इति सिद्धम् ॥

इति नन्दीश्वरकृत प्रभाकरविजये वक्तृज्ञानानुमानाख्य प्रकरणं समाप्तम् ।*

---

कार्यस्यानज्जन्यत्वावधारणात् निवर्तितुमर्हति । नन्वनुमितमप्यर्थं पश्चादनुवदद्वाक्यं वाचकं शक्तं स्यात्, तन्न; अनुवादकत्वे प्रमाणाभावात् । न ह्यनुवादकत्वमन्तरेण किञ्चिदनुपपन्नं यतस्तत्कल्प्येत । शक्तत्वादनुवादकत्वमिति चेत् तदितरेतराश्रयं शक्तेरनुवादस्ततश्च शक्तिरिति । तस्मान्न वाचकत्वं सिध्यति । यदि परमर्थविशेषविषयज्ञानानुमान सिद्ध्यर्थं पुनर्वाचकत्वमावस्थाप्येत तच्चान्तरेणापि वाचकत्वं शब्दविशेषस्य ज्ञानविशेषेणैव व्याप्तिग्रहणसम्भवादनुपपन्नम् । तस्माल्लोकवचसामनुमानत्वेन प्रामाण्यांगीकरणे पदानां वचकत्वायोगादनुपादत्वेनाप्रामाण्यं वेदस्य स्यादिति तत्प्रामाण्यसिद्ध्यर्थं लोकेऽपि शब्दानां शब्दतयैव प्रामाण्यमभ्युपगन्तव्यमिति—न्यायरत्नमालोक्तं परास्तम् । व्यभिचारशंका हि अनुमान एवं भवति, न प्रत्यक्षे, शक्तिस्तु प्रत्यक्षैव । वाक्यार्थज्ञानं हि अनुमानाधीनं न शक्तिज्ञानमिति भावात् ।

* इयमत्र प्रकरणपञ्चिका:—

अथासंस्पर्शिताशङ्का यथा शब्दस्य वार्यते ।<br>
प्रभाकरगुरोः शिष्यैस्तथा यत्नो विधीयते ॥ १ ॥<br>
अत्र लौकिककवाक्यानां व्यभिचाराभिमानतः ।<br>
अर्थासंस्पर्शितां केचिदाहुः शब्दस्य वादिनः ॥ २ ॥<br>
निश्चयोऽर्थस्य संस्पर्शः स चार्थाव्यभिचारिणः ।<br>
प्रत्यक्षादेरेव भवेच्छब्दस्तु व्यभिचारवान् ॥ ३ ॥<br>
विनाप्यर्थं हि शब्देन प्रतीतिरुपजायते ।<br>
अंगुल्यग्रेऽस्ति करिणां यूथमित्येवमादिना ॥ ४ ॥

नचात्र शक्यते वक्तुं शुक्तौ रजतबोधवत् ।
अग्रहाद्‍ भ्रान्तिरेवेति कारणस्याविशेषनः ॥ ५ ॥
दुष्टा हि हेतवः कार्यं सम्पूर्णं कर्तुमक्षमाः ।
तेन भेदाऽग्रहो युक्तः शुक्तिकारजतादिषु ॥ ६ ॥
इह तु ज्ञानहेतुर्यः शब्दः स न विशिष्यते ।
विशिष्यते यस्तु वक्ता स ज्ञानस्य न कारणम् ॥ ७ ॥
वक्तापि यदि विज्ञानहेतुः स्यादिन्द्रियादिवत् ।
ततस्तस्याऽपि दोषेण भवेदग्रहणं तदा ॥ ८ ॥
वक्ता तु केवलं शब्दव्यक्तावेवोपयुज्यते ।
ज्ञानं तु शब्दमात्रेण निरपेक्षेण जन्यते ॥ ९ ॥
न च तस्येह दुष्टत्वं किंचिदप्युपलभ्यते ।
दोषश्चाग्रहणे हेतुस्तदभावे स्फुटो ग्रहः ॥ १० ॥
तेन शब्दोपजनितं ज्ञानमेवेदमीदृशम् ।
अर्थं व्यतिक्रामतीति कुतस्तेनार्थनिश्चयः ॥ ११ ॥
येनापि हि विना यस्य सद्भाव उपपद्यते ।
निश्चयस्तत्र तेनेति सुभाषितमिदं वचः ॥ १२ ॥
नन्वेवमाप्तवाक्येभ्यः कथं व्यवहृतिर्भवेत् ।
व्यवहारो हि लोकस्य कथं स्यान्निश्चयं विना ॥ १३ ॥
उच्यते व्यवहारो हि संदेहादपि लौकिकः ।
प्रायशो दृश्यते तेन न किंचिदिह दुष्यति ॥ १४ ॥
अपि चाप्तत्वमालोच्य वक्तुस्तत्रार्थनिश्चयः ।
मानान्तरवशेनापि कथंचिदुपपद्यते ॥ १५ ॥
वेदस्त्वलौकिकार्थत्वादभावाद्वक्तुरेव च ।
अहो बत दशां कष्टामुपनीतोऽपि पण्डितैः ॥ १६ ॥
अत्र प्रतिविधानाय यतन्ते मतिशालिनः ।
ज्ञानस्य व्यभिचारित्वं नयवीथ्यां निवारितम् ॥ १७ ॥
श्रूयतामवधानेन गतिर्नरगिरामपि ।

अनुमानात्पृथग्भावं तासां नेच्छन्ति सूरयः ॥ १८ ॥
वाक्यं हि पुरुषाधीनरचनं लौकिकं सदा ।
शंक्यमानायथार्थत्वं नार्थनिश्चायकं यतः ॥१९॥
अन्योन्यानन्वितार्थानि पदान्यपि हि मानवाः ।
रचयन्तो विलोक्यन्ते तेन नान्वयनिश्चयः ॥ २० ॥
केचित्तावद् भ्रमेणैव केचिदाशयदोषतः ।
प्रमादात्केऽप्यशक्तेश्च केऽप्यनन्वितवादिनः ॥२१॥
तदुक्तानां पदार्थानां यद्यप्यन्वययोग्यता ।
तथाप्यनन्वितस्यापि दृष्टेर्नान्वयनिश्चयः ॥ २२ ॥
तत्र निश्चयशब्देन ज्ञानमेवाभिधीयते ।
अन्वयानिश्चये तेन ज्ञानमेवास्ति नान्वये ॥ २३ ॥
शङ्क्यमानायथार्थत्वरचनं तेन पुंवचः ।
श्रुतमात्रकमेवार्थे न तावन्निश्चयावहम् ॥ २४ ॥
यावद्वक्तुरविज्ञातं पूर्वभावि प्रमान्तरम् ।
विवक्षितार्थविषयमिन्द्रियार्थनिबन्धनम् ॥ २५ ॥
तस्य ज्ञानं च वाक्येन लिङ्गभूतेन गम्यते ।
ज्ञात्वैवार्थं ब्रवीतीति य एवमवधारितः ॥ २६ ॥
तस्य ज्ञानेन नियतं वाक्यं ज्ञानानुमापकम् ।
ज्ञानं चार्थाविनाभावि तेनार्थेऽपि विनिश्चयः ॥२७॥
ततोऽर्थे निश्चिते पश्चात्सोऽर्थो वाक्येन गम्यते ।
तस्यां दशायां वाक्यस्य तस्य स्यादनुवादता ॥२८॥
पूर्वं च लिङ्गभूतत्वं वक्तुर्ज्ञानावधारणे ।
वक्तुर्ज्ञानप्रसूतं हि वाक्यं तत्कार्यमिष्यते ॥ २९ ॥
कार्यात्कारणसिद्धिश्च सर्वेषामनुवादतः ।
पौरुषेयमतो वाक्यं न शास्त्रमभिधीयते ॥ ३० ॥
एवञ्च सति लिङ्गस्य व्यभिचारोऽयमीक्ष्यते ।
न शास्त्रस्येति तस्य स्यादर्थासंस्पर्शिता कुतः ॥३१॥

लिङ्गस्यापि न चैवायं व्यभिचारोऽस्ति किन्तु यः ।
लिङ्गालिङ्गे न शक्नोति विवेक्तुं मूढचेतनः ॥ ३२ ॥
तस्यालिङ्गे लिङ्गरूपसाधारण्यनिबन्धनः ।
लिङ्गसंव्यवहारोऽयं विपरीतः प्रवर्तते ॥ ३३ ॥
श्रुतिलिङ्गाधिकरणे विस्तरेणैवमीरितम् ।
तेन न व्यभिचारोऽस्ति द्वयोर्लैङ्गिकशास्त्रयोः ॥३४॥
नन्वर्थ एव प्रथमं पुंवाक्येभ्योऽवगम्यते ।
अन्यथा हि कथं :वक्तुर्धीर्विशिष्टाऽनुमीयते ॥ ३५ ॥
अर्थेनैव विशेषो हि निराकारतया धियाम् ।
नचाप्रतीतेनार्थेन विशेषश्चावऽकल्पते ॥ ३६ ॥
अत्र ब्रूमो ऽयथार्थत्वशङ्कया ऽर्थो न निश्चितः ।
अनिश्चितश्च न ज्ञात इति तावद्व्यवस्थितम् ॥३७॥
किंत्वज्ञाते ऽपि शब्दार्थे पदजाते श्रुते सति ।
विमर्शो जायते श्रोतुरीदृशो मतिशालिनः ॥ ३८ ॥
अन्योन्यान्वययोग्यार्थं पदजातं ब्रवीत्ययम् ।
आप्तस्तेनामुना नूनं ज्ञातस्तेषां समन्वयः ॥ ३९ ॥
न कदाचिदसंबद्धानर्थानेष विवक्षति ।
न वा ऽप्रतीतसम्बन्धानिति दोषो न कश्चन ॥ ४० ॥
नन्वेवं तुरगारूढस्तुरङ्गं विस्मृतो भवान् ।
वेदप्रामाण्यसिद्ध्यर्थमुत्थितस्तत्प्रहीणवान् ॥४१॥
लोकावगतशक्तिर्हि वेदे शब्दो ऽवबोधकः ।
लोके च लिङ्गभावेन प्रतीतिर्भवताश्रिता ॥ ४२ ॥
स्वयं त्विह समाधानमाचार्येणैव दर्शितम् ।
शब्दस्यार्थेन सम्बन्ध इति दर्शयता सता ॥ ४३ ॥
अन्विताभिधायित्वे पदानां हि स्थिते सति ।
विशिष्टा वक्तृधीर्ज्ञातुं शक्यते नान्यथा यतः ॥४४॥
ज्ञातेषु हि पदार्थेषु श्रोता वक्तरि कल्पयेत् ।

अन्योन्यान्वयविज्ञानं नान्यथेत्युपदर्शितम् ॥ ४५ ॥
पदानां तत्पदार्थेषु शक्तिः स्वाभाविकी स्थिता ।
पुंवाक्येषु विसम्वादशङ्कया सा तिरोहिता ॥ ४६ ॥
वेदेषु त्वस्मर्यमाणकर्तृकेषु स्वरूपतः ।
प्रमाणान्तरसंस्पर्शरहितार्थावबोधिषु ॥ ४७ ॥
न कर्तुरनुमानं स्याद्वाक्यत्वादिति लिङ्गतः ।
न कर्ता शक्नुयाद्वाक्यं कर्तुं कार्यं हि लौकिके ॥४८॥
तेन वेदे विसम्वादशङ्का नास्ति कथंचन ।
अर्थनिश्चयहेतुत्वादर्थसंदर्शिता स्थिता ॥४९॥ इति



# (३) अख्यातिसमर्थनप्रकरणम् ।

* सम्प्रति सर्वे विज्ञानानां यथार्थत्वं प्रतिपाद्यते । सर्वेषां यथार्थत्वे भ्रान्ताभ्रान्त व्यवस्था न सिद्ध्यतीति चेन्न;यथा भवतां ज्ञानत्वाविशेषेऽपि किञ्चिद्यथार्थम्, किञ्चिदयथार्थं तथा यथार्थत्वेऽपि भ्रान्ताभ्रान्तव्यवस्थोपपत्तिः ॥

कारणदोषबाधकवशाद् व्यवस्थासिद्धिरिति चेत्, तर्हि तेनैव भ्रान्ताभ्रान्तव्यवस्थास्तु ॥

भवतां यथार्थत्वे ज्ञानस्य बाधो नास्तीति चेत्, भवतां वा ज्ञानत्वाविशेषे कथं बाधोपपत्तिः ?

ज्ञानत्वाविशेषेऽपि 'नेदं रजतम्' इति ज्ञानोदयदर्शनात् कल्प्यत इति चेत्, यथार्थत्वेऽपि तर्हि दर्शनबलादेव कल्प्यताम् ॥

अयं तु विशेषः—भवतां ज्ञानस्वरूपबाधयाऽयथार्थत्वम्, अस्माकं तु व्यवहारबाधया ; अतो येनैव कारणेन यथार्थायथार्थविवेकः, तेनैव कारणेन भ्रान्ताभ्रान्तविवेक इति समानम् ॥

ननु—यदि शुक्तिकायां रजतज्ञानं न जायते,तर्हि शुक्तिकायां रजतप्रवृत्तिः कथमुपपद्यते ? नावश्यं शुक्तिकायामेव रजतज्ञानमास्थेयम्, रजते रजतज्ञानमात्रादेव शुक्तिकायां रजतप्रवृत्त्युपपत्तेः । अन्यविषयज्ञानादन्यत्र प्रवृत्तिर्न दृष्टेति चेत्, सत्यम्; अन्यावभासिनो ज्ञानस्यान्यत्र जननमपि न दृष्टम् ॥

किञ्चायथार्थज्ञानादपि प्रवृत्तिरन्यत्र न दृष्टा । शुक्तौ रजतप्रवृत्त्यन्यथानुपपत्त्या कल्प्यत इति चेत्, तर्हि तथैवानुपपत्त्यान्यविषय-

---

* चोदनालक्षणोऽर्थो धर्म इति सूत्रे चोदनैव प्रमाणमिति नियमो यो विवक्षितस्तद्व्यावर्त्यतां लौकिकवाक्यप्रामाण्यस्य निरूप्य चोदना प्रमाणमेवेति नियमान्तरप्रतिपादनार्थं सर्वज्ञानयाथार्थ्यवादमुपपादयति—संप्रतीति ।

ज्ञानस्यान्यत्र प्रवृत्तिहेतुत्वमात्रं कल्प्यताम्; किमयथार्थत्वव्यसनेन?

यथार्थज्ञानस्यान्यत्र प्रवृत्तिहेतुत्वेऽव्यवस्थेति चेत्, भवतामन्यान्यावभासिनो ज्ञानस्यान्यत्रोत्पादेऽव्यवस्था समैव ॥

कारणदोषबाधकप्रत्ययवशेन व्यवस्थासिद्धिरिति चेत्, अस्माकमपि तथैव व्यवस्थाऽस्तु । अतः सर्वं समानमन्यत्राभिनिवेशात् ॥

वस्तुतः सामानाधिकरण्यादेव प्रवृत्त्युपपत्तिः । सामानाधिकरण्यं च धर्मधर्मिणोर्निरन्तरभानम् । सम्यङ्ज्ञानेऽपि रजतजातिरूपितव्यक्तिग्रहणात्, 'इदं रजतम्' इति प्रवृत्तिः, न सम्बन्धग्रहणात्; अतोऽन्यत्र सम्बन्धाभावेऽपि रजतजातिरूपितव्यक्तिपरिग्रहादसंबन्धाग्रहसहितात् प्रवृत्त्युपपत्तिः ॥

अतएव—विवेकाग्रहणात् प्रवृत्तौ युगपत् प्रवृत्तिनिवृत्ती स्याताम्—इति चोद्यस्यानवकाशः, निरन्तरभानात् प्रवृत्तेः । अतः प्रसज्यमानरजतव्यवहारनिवारणाद् बाधकप्रत्ययस्याप्युपपत्तिः ॥

शुक्तिकायामिन्द्रियसंप्रयोगानन्तरभावित्वेन शुक्तिकाविषयमिति चेन्न, * रजतस्मृतित्वेऽप्युद्बोधापेक्षया चक्षुरपेक्षोपपत्तेः ॥

लोष्टादावप्युद्बोधप्रसङ्ग इति चेन्न; भवतां लोष्टादौ रजतज्ञानं किमिति न जायते? सादृश्याभावादिति चेत्, उद्बोधकत्वमपि सादृश्याभावादेव नाश्रीयताम् ॥

स्मृतित्वे 'तद्रजतम्' इति स्यादिति चेत्, शुक्तिकाविषयत्वे वा 'शुक्तिकाविषयम्' इति किन्नानुसन्धीयते?

कारणदोषादेव तदनुसन्धानं न जायते इति चेत्, अस्माकमपि कारणदोषादेव तत् इति नानुसन्धानमिति सममेव सर्वमनुपपत्तिजातम् ॥

विषयव्यवस्था भासमानतया वाच्या, न व्यवहारयोग्यतापत्ति-

* यद्यपि स्मृतेरपि न प्रामाण्यम्; इत्यनन्तर प्रकरणे निरूपयिष्यते; तथापि पूर्वबुद्ध्यनपेक्षत्वलक्षणमेवप्रामाण्यं तत्र निरस्यते, नतु अबधितत्वलक्षणमिति न विरोधः । एतेन—

त्रिषयत्वम्; निर्विकल्पस्य निर्विषयत्वप्रसङ्गात् । नच प्राकट्ययोग्यत्वम् तस्यैवाभावात् । भासमानत्वं चेत् इदमेव ज्ञानं तावदर्थाधीननिरूपणम् यदर्थाधीन निरूपणं यद्ज्ञानं सोऽर्थस्तस्य विषयः । निर्विकल्पकद शायामप्यर्थेनैव ज्ञानस्य विशेष इति सिद्धम् । अत्रतु रजतज्ञानमिति रजतप्रतियोगित्वेन ज्ञानोदयः । इतरथा रजतज्ञानं शुक्तिकाविषयं स्यात् । ततो यदयथार्थम् भ्रान्तत्वात् प्रवृत्तिहेतुत्वादित्येतत्सव धर्मिग्राहक प्रमाणविरोधादेवापास्तम्; रजतज्ञानमिति निर्देशादेव रजतविषयत्वाङ्गीकारात्, शुक्तिविषयत्वप्रतिज्ञायास्तेनैव बाधात् ॥

यथार्थत्वे च ज्ञानत्वाद्व्यवहारहेतुत्वादर्थप्रकाशकत्वादित्यनुमान *निर्दूषणम् । एवमर्थापत्त्युपन्यासेऽपि यथार्थत्वेऽपि सर्वमुपपद्यत इति पूर्वोक्तन्यायेनैवान्यथोपपत्तिर्वक्तव्या ॥

---

* इयमत्र प्रकरणपाञ्चिका:—

यथार्थं सर्वमेवेह विज्ञानमिति सिद्धये ।
प्रभाकरगुरोर्भावः समीचीनः प्रकाश्यते ॥ १ ॥

तत्र तावदिदं केचिदूचिरे चारुचेतसः ।
भ्रमसन्देहविज्ञाने अयथार्थे उभे इति ॥ २ ॥
इदं रजतमित्येषा या शुक्तिशकले मतिः ।
सा चेद्यथार्था भ्रान्तित्वं तदा तस्यास्तु कीदृशम् ॥३॥
यथावस्थितवस्त्वाभमपि ज्ञानं यदा भ्रमः ।
प्रमाणेषु तदाऽऽपन्ना सर्वेषु भ्रमरूपता ॥४॥
विवेकाग्रहणं भ्रान्तिरिति चेन्नैतदीदृशम् ।
सुषुप्तेऽपि भ्रमापत्तेः सर्वभेदापरिग्रहात् ॥ ५ ॥
भेदाग्रहे गृहीते च यदि स्याद् भ्रमरूपता ।
दूरात् सामान्यमात्रस्य दर्शनं स्यात् भ्रमस्तदा ॥६ ।
यथार्थदर्शनत्वे च बाधको ऽपि न युज्यते ।
अज्ञातभेदग्रहणो न बाधकमतिर्भवेत् ॥ ७ ॥
यथार्थतापि चैतस्याः कथमित्यपि [illegible]

किंच न कारणाभावादेवान्यथा ज्ञानम् । कारणदोषादेव जायत इति चेन्न; दोषाणां कार्यविघातहेतुत्वमेव, नतु कार्यान्तरजननम् ।

एषा ऽपि रजतत्वेन शुक्तिकामध्यवस्यति ॥ ८ ॥
रजतत्वं न शुक्तेश्च रजतस्य न शुक्तिता ।
तयोरन्योन्यभिन्नत्वं प्रत्यक्षेणावधारितम् ॥ ६ ॥
अथेयं रजतत्वेन न शुक्तिमवलम्बते ।
सामानाधिकरण्येन प्रतिपत्तिर्विरुध्यते ॥ १० ॥
रूप्यार्थिनः प्रवृत्तिश्च शुक्तौ स्यान्निर्निबन्धना ।
अग्रहो ऽपि न भेदस्य प्रवृत्तौ कारणं यतः ॥ ११ ॥
रजतप्रतिपत्तिश्च नेयमन्धस्य जायते ।
तेनेयमिन्द्रियाधीना संयुक्ते चेन्द्रियं धियम् ॥ १२ ॥
समर्थमुत्पादयितुं शुक्तिसंयोगि चेन्द्रियम् ।
तेन सैवेन्द्रियेणेह रजतत्वेन गृह्यते ॥ १३ ॥
स्यान्मतं शुक्तिकामात्रमिन्द्रियेणावसीयते ।
तदेव सदृशत्वेन रजतस्मृतिकारणम् ॥ १४ ॥
सदृशप्रत्ययेनेह संस्कारोद्बोधहेतुना ।
तदित्युल्लेखरहिता रजते भवति स्मृतिः ॥ १५ ॥
स्मृतावस्यां मनोदोषात् तदित्यंशो ऽवखण्डितः ।
तेनेन्द्रियानुकारित्वमन्यथासिद्धमित्यसत् ॥ १६ ॥
अनुभूतेऽपि विषये तत्परामर्शवर्जितम् ।
न बोधं स्मृतिमिच्छन्ति धारावाहिकबोधवत् ॥१७॥
अपरोक्षपुरोवर्तिसामानाधिकरण्यतः ।
नेयं स्मृतिः किन्तु शुक्तौ भ्रान्तोऽयं रजतग्रहः ॥१८॥
स्मृत्युद्बोधनिमित्तं च स्वप्ने किञ्चिन्न विद्यते ।
पीतशङ्खावबाधे च द्विचन्द्रग्रहणे तथा ॥ १६ ॥
दिङ्मोहालातचक्रादिभ्रान्तयश्च कथं पुनः ।
स्मृतित्वाश्रयणेनैता वर्णनीया यथार्थतः ॥ २० ॥

दग्धाद्वेत्रबीजात् कदल्यङ्कुरोत्पत्तिरिति चेन्न, दाहस्य तत्र साम

तेनेन्द्रियादिदोषेण जायन्ते भ्रान्तिबुद्धयः ।
बुध्यमाना वस्तुरूपमन्यथास्थितमन्यथा ॥ २१ ॥
स्थाणुर्वा पुरुषो वेति सन्देहो योऽपि जायते ।
अभावात्तादृशोऽर्थस्य स यथार्थः कथं भवेत् ॥२२॥
अत्र ब्रूमो य एवार्थो यस्यां संविदि भासते ।
वेद्यः स एव नान्यद्धि वेद्यावेद्यस्य लक्षणम् ॥ २३ ॥
इदं रजतमित्यत्र रजतञ्चाऽवभासते ।
तदेव तेन वेद्यं स्यान्न तु शुक्तिरवेदनात् ॥ २४ ॥
तेनान्यस्यान्यथा भानं प्रतीत्यैव पराहतम् ।
परस्मिन् भासमाने हि न परं भासते यतः ॥ २५ ॥
नन्वेवं रजताभासः कथमेष धरिष्यति ।
उच्यते शुक्तिशकलं गृहीतं भेदवर्जितम् ॥ २६ ॥
शुक्तिकाया विशेषा ये रजताद्भेदहेतवः ।
ते न ज्ञाता अभिभवाद् ज्ञाता सामान्यरूपता ॥२७॥
अनन्तरञ्च रजते स्मृतिर्जाता तयापि च ।
मनोदोषात् तदित्यंशपरामर्शविवर्जितम् ॥ २८ ॥
रजतं विषयीकृत्य नैव शुक्तेर्विवेचितम् ।
स्मृत्याऽतो रजताभास उपपन्नो भविष्यति ॥ २९ ॥
धारावाहिकवन्नेयं स्मृतिरित्युदितञ्च यत् ।
उच्यते ऽनन्यगतितः स्मृतिरत्राऽवगम्यते ॥३०॥
न ह्यसन्निहितं तावत् प्रत्यक्षं रजतं भवेत् ।
लिङ्गाद्यभावाच्चान्यस्य प्रमाणस्य न गोचरः ॥ ३१ ॥
परिशेषात् स्मृतिरिति निश्चयो जायते पुनः ।
तस्मात् कारणसद्भावधारावाहिकधीषु तु ॥ ३२ ॥
प्रत्युत्पन्नेन्द्रियग्रामसामग्रीग्रहकारणम् ।
ग्रहणे स्मरणे चमे त्रिवेकानवभासिनी ॥ ३३ ॥

ग्रीत्वात् । दोषस्यापि समाग्रीत्वे दोष एव न स्यात् । कार्यं चायथार्थं न स्यात् ॥

सम्यग्रजतबोधात्तु भिन्ने यद्यपि तत्वतः ।
तथापि भिन्ने नाभातो भेदाग्रहसमत्वतः ॥ ३४ ॥
सम्यग्रजतबोधश्च समक्षैकार्थगोचरः ।
ततो भिन्ने अबुध्वा तु स्मरणग्रहणे इमे ॥ ३५ ॥
समानेनैव रूपेण केवलं मन्यते जनः ।
अपरोक्षार्थबोधेन समानार्थग्रहेण च ॥ ३६ ॥
अवैलक्षण्यसंवित्तिरिति तावत् समर्थितम् ।
व्यवहारोऽपि तत्तुल्यस्तत एव प्रवर्तते ॥ ३७ ॥
समत्वेन च संवित्तेर्भेदस्याग्रहणेन च ।
मिथ्याभावोऽपि तत्तुल्यव्यवहारप्रवर्तनात् ॥ ३८ ॥
रजतव्यवहारांशे विसम्वादयतो नरात् ।
बाधकप्रत्ययस्यापि बाधकत्वमतो मतम् ॥ ३९ ॥
प्रसज्यमानरजतव्यवहारनिवारणात् ॥ ४० ॥
सन्निहितरजतशकले रजतमतिर्भवति यादृशी सत्या ।
भेदानध्यवसायादियमपि तादृक् परिस्फुरति ॥ ४१ ॥
साधारणं हि रूपं तस्या अस्याश्च विद्यते तेन ।
तन्मात्रप्रतिभानात् समानतामेव मन्यन्ते ॥ ४२ ॥
तत्तुल्यव्यवहारप्रसक्तिरपि युज्यते चातः ।
तद्विनिवारणकरणाद् बाधकता बाधकस्यापि ॥ ४३ ॥
एवं स्वप्नेऽपि वस्तूनि स्मर्यमाणानि सन्त्यपि ।
अनुभूतांशमोषेण भासन्ते गृह्यमाणवत् ॥ ४४ ॥
ग्रहणस्य विशेषो हि गृहीतग्रहणं स्मृतिः ।
सा गृहीतांशमोषेण गृहीतिरिति तिष्ठति ॥ ४५ ॥
संस्कारोद्बोधहेतुश्च तत्रादृष्टं प्रकल्प्यते ।
विपरीतख्यातिपक्षेऽप्येषा तुल्या हि कल्पना ॥ ४६ ॥

किञ्च अयथार्थत्वे सर्वत्रानाश्वास एव स्यात्; असत्ख्याति

अदृष्टस्य तु हेतुत्वाज्जाग्रतस्तादृशी न धीः।
अवस्थापि ह्यदृष्टस्य सामग्री फलसम्भवे ॥ ४७ ॥
पीतशङ्खावबोधे च पित्तस्येन्द्रियवर्तिनः।
पीतिमा गृह्यते द्रव्यरहितोऽग्निवत्? तिग्मता ॥ ४८ ॥
शङ्खस्येन्द्रियदोषेण शुक्लिमा च न गृह्यते।
केवलं द्रव्यमात्रन्तु प्रथते रूपवर्जितम् ॥ ४९ ॥
गुणे द्रव्यव्यपेक्षे च द्रव्ये च गुणकाङ्क्षिणि।
भासमाने तयोर्बुद्धिरसम्बन्धं न बुध्यते ॥ ५० ॥
सत्यपीतावभासेन समे भातो मती इमे।
व्यवहारोऽपि तत्तुल्य एवमत्रापि युज्यते ॥ ५१ ॥
यत्तु नेत्रगतस्यापि कज्जलस्य न कालिमा।
गृह्यते कारणं तत्र तेनेन्द्रियनिरोधनम् ॥ ५२ ॥
अतसीपुष्पसंकाशं यत् तावन्नेत्रमण्डलम्।
तत्रस्थमञ्जनं यत्तत् तेजोवृत्तिनिरोधकम् ॥ ५३ ॥
मण्डलान्तरसंस्थं तु यन्नाम नयनेऽञ्जनम्।
तस्यानार्जवदोषेण नीलिमा नावगम्यते ॥ ५४ ॥
इन्द्रियोपरिभागेऽपि लिप्तेन स्वच्छभावतः।
पित्तेन नायनं तेजः काचेनेव न रुध्यते ॥ ५५ ॥
प्रसरन्नायनं तेजो ग्राहकं नाश्रयस्थितम्।
पित्तस्याऽग्रहणं सौक्ष्म्यात् प्रभायामिव तेजसः ॥५६
मधुरे तिक्तधीरेवं व्याख्याता पित्तवर्तिनः।
तैक्ष्ण्यस्य रसहीनस्य गुडस्य च परिग्रहात् ॥ ५७ ॥
तथा द्विचन्द्रबोधेऽपि भिन्नमेवेन्द्रियं महः।
भिन्ने जनयति प्रख्ये एकस्मिन्नेव शीतगौ ॥ ५८ ॥
सम्वित्ती ते न भिद्येते तद्बुद्धित्वे सति मन्यते।
भिन्नार्थबुद्धितुल्यत्वमत्रापि खलु पूर्ववत् ॥ ५९ ॥

प्रसङ्गश्च, रजतस्य शुक्तिरूपेणासत्त्वात्, संशयज्ञानस्यापि यथार्थत्वम्, स्मृतिद्वयरूपत्वात्। अतः सर्वमेवेदं ज्ञानं यथार्थमिति स्थितम्॥

इति नन्दीश्वरस्य प्रभाकर विजये अख्याति समर्थन-
प्रकरणं समाप्तम्।

स्मरतोऽप्येकतां तेन भ्रमोऽयमुपपद्यते।
न हि स्मृतिप्रमोषेण सर्वत्रैव भ्रमो मतः॥ ६०॥
दिङ्मोहे दृष्टसामर्थ्याद् दिक्स्वरूपानवग्रहात्।
दिगन्तरस्वरूपस्य स्मरणाच्च भ्रमो मतः॥६१॥
अलातचक्रेऽलातस्य भ्रमतः सर्वतोऽद्भुतम्।
निरन्तरं धियो जाताश्चक्रबुद्धिसमा मताः॥ ६२॥
कालभेदस्तु शीघ्रत्वाद्धियां तासां न लक्ष्यते।
चक्रधीव्यवहारश्च तेनास्मिन्नपि युज्यते॥ ६३॥
एतेनैव प्रकारेण सर्वभ्रान्तिषु पण्डितैः।
ऊहनीया हेतुभेदा यथार्थज्ञानसिद्धये॥ ६४॥
स्थाणुर्वा पुरुषो वेति सन्देहेऽपि यदा द्वयम्।
स्मर्यते ऽन्योन्यनिर्मुक्तं तदार्थविरहः कुतः॥ ६५॥

*　*　*　*　*

अयथार्थत्वपक्षे च ज्ञानं साकारमापतेत्।
आकारो भासते यो हि ज्ञान एवावतिष्ठते॥ ७२॥
अयथार्थस्य बोधस्य नोत्पत्तावस्ति कारणम्।
दोषाश्चेन्न हि दोषाणां कार्यशक्तिविघातिका॥ ७३॥
भस्मकादिषु कार्यस्य विघातादेव दोषता।
अग्नेर्हि रसनिष्पत्तिः कार्यं जठरवर्तिनः॥ ७४॥
विद्यमानवस्तुरूपग्रहणे प्रतिबन्धृता।
दोषाणामुपपन्नेति भ्रान्तिग्रहनिबन्धता॥ ७५॥"इति"

——

# (४) प्रमाणलक्षण प्रकरणम्।

*अनुभूतिः प्रमाणम्। काचानुभूतिः? स्वतन्त्रपरिच्छित्तिः। किमिदं स्वातन्त्र्यं नाम? परिच्छेदे पूर्वबुध्द्यनपेक्षत्वम्; स्मृतिस्तु परिच्छेदे पूर्वबुध्द्यपेक्षैवेति न प्रमाणम्॥

अनुमानं तर्हि न प्रमाणम्, तस्य पूर्वबुध्द्यपेक्षत्वादिति चेन्न; तस्य न परिच्छेदे पूर्वबुध्द्यपेक्षत्वम्, किंतूत्पत्तावेव॥

---

* अत्रानुभूतिशब्देन वृत्त्यवच्छिन्नसंविदद्वैत्यभिमता या सा किं विवक्ष्यते, उत केवलसंविद् इति विचारे यदि केवलसंविदेव विवक्ष्येत, तर्हि तस्याः प्रकरणपञ्चिकायामनुमानादिष्वपि स्वांशे प्रत्यक्षत्वमेव संविद् इति निरूप्यानन्तरमनुमेयज्ञानं किमिति प्रश्ने यदुत्तरं दत्तं "किंतदिति न विद्मः; संविदुत्पत्तिकारणमात्ममनःसंकिर्षाख्यं तदित्यवगम्य परितुष्यतामायुष्मते"ति, तत्रापरस्यापि ज्ञानस्यानुमेयस्य सूचनात् तदनुपपत्तिः स्यात्। अतो वृत्तिविशिष्टसंविदेव विवक्ष्यते। तत्रच वृत्तिरनुमेया संवित् प्रत्यक्षेति विषयविवेकः सिद्धो भवति। एवंच सति "संवित् न संवेद्या, किन्तु प्रमेये"ति बृहती वाक्यस्यापि "फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम्। ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते" इति पंचपादिका सिद्धान्त एव सूक्ष्मदृष्ट्या पर्यालोचने पर्यवसानं भवति। एवं प्रभाकरसंप्रदायस्याद्वैतमते पर्यवसानकल्पनं हि बृहत्यादीनामपि संमतम्। यतो बृहत्यामद्वैतमतेऽत्यन्तमेवादरः, कर्मप्रवणत्वेन प्रकृते तदुपपादनानवसरश्च प्रतिपाद्यते। ततश्च तत्र-तत्रात्मनो ज्ञानातिरिक्तत्वं यत्प्रभाकरमतावसरे प्रतिपाद्यते,तदपि वृत्तिरूपज्ञानातिरिक्तत्वाभिप्रायमेव, न संविदतिरिक्तत्वाभिप्रायमेव। तदुक्तं बृहत्यां विज्ञातृरूपता तु विज्ञानस्यानाशंकनीया; अनाशंकितत्वात्। युक्तंचानाशंकितं कर्मप्रवणत्वादि"ति। एवंचात्मास्वप्रकाशतावादोऽपि व्यवहारदृष्ट्यैव न परमार्थदृष्ट्येति बृहत्याशय इति गम्यते। अंहकार-

कथमिदमवगम्यते—स्मृतेः परिच्छेदे पूर्वबुध्यपेक्षत्वम्, अनुमानस्य तूत्पत्ताविति ? ज्ञानस्वभावादेव सुखमवगन्तुं शक्यते । [ तदाह ]— स्मृतिर्हि 'तत्' इत्युपजायमाना प्राचीं प्रतीतिमनुरुध्यमाना न स्वातन्त्र्येणार्थं परिच्छिनत्तीति न प्रमाणं स्मृतिरिति, अनुमाने तु 'तत्' इति वेषाभावादुत्पत्तौ पूर्वबुध्यपेक्षेति निश्चीयते ॥

स्मृतिप्रमोषस्तर्हि प्रमाणम् ? 'तत्' इति वेषाभावात्, मैवम्, नावश्यं वेषत एव स्मृतित्वनिर्णयः, अपितु कारणतोऽपि; स्मृतिप्रमोषेऽपित्वग्रहणकारणसम्भवात् स्मृतित्वमित्यख्यातिसमर्थने व्यक्तमुक्तम् । स्मृतेः पूर्वबुध्यपेक्षा चेत्थम्—पूर्वबुद्धिविशिष्टार्थपरिच्छेदाद्वा, पूर्वबुध्युपलक्षितार्थ परिच्छेदाद्वा ।

ननु स्मृतेरपि स्वस्मिन् मातरि च प्रमाणत्वमिष्टम्, सत्यम्, स्मृतेः स्वापेक्षयाऽऽत्मापेक्षया च स्वातन्त्र्यमस्त्येव, अर्थापेक्षया च स्मृतित्वमस्वातन्त्र्यं च; अतो नातिव्याप्तमव्याप्तं वा लक्षणम् । अतः सिद्धं निरपेक्षत्वं प्रमाणस्य ॥

इति नन्दीश्वरकृत प्रभाकर विजये प्रमाणलक्षण
प्रकरणं समाप्तम्।



ममकारादिकमपि अन्तःकरणप्रत्यगात्मनोः परस्परतदात्म्याध्यास निबन्धनमित्येव परमार्थगतिः, एवमपि कर्मप्रसङ्गे तथा निरूपणमनवसरमिति बृहत्यां निरूपितम्। तद्यथाः—अहंकारममकारौ अनात्मनि-आत्म धर्माध्यास इति मृदितकषायाणामेतत्कथनीयम्, नतु कर्मसङ्गिनाम्, तदुक्तं भगवता द्वैपायनेन—"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्" इति।" इत्यादिकं श्रीयुक्तपशुपतिनाथशास्त्रिणां मीमांसोपोद्‌घात नामके ग्रन्थे प० म० म गङ्गानाथ झा महाशयानां मतपरीक्षण पूर्वकं सम्यग्विवेचितमिति तत एव द्रष्टव्यम् ।

## (५) अथ प्रत्यक्षलक्षण प्रकरणम् ।

* साक्षात् प्रतीतिः प्रत्यक्षम् । साक्षात्प्रतीतिः स्वरूपप्रतीतिः । स्वस्यैव रूपं स्वरूपं असाधारणरूपमित्यर्थः; यस्य वस्तुनो यदसाधारणं स्वरूपं, तेनैव रूपेण या व्यवहारयति, सा साक्षात्प्रतीतिः । जात्यादिविशिष्टस्य सविकल्पकज्ञानस्य साधारणाकारविषयत्वात् प्रत्यक्षत्वं न स्यादिति चेत्, न असाधारणाकारेणापि विषयीकारात्; असाधारणाकारस्यान्वयात्र लक्षणम्, न साधारणाकारव्यावृत्तिरपि, अनुमाने तु साधारणभूतव्यापकाकारेणैव सम्बन्धप्रतीतेर्न साक्षात्त्वम् ।

यद्वा अव्यवहितप्रतीतिस्साक्षात्प्रतीतिः । विशिष्टज्ञानस्य विशेषणज्ञानव्यवहितत्वात् प्रत्यभिज्ञानस्य पूर्वज्ञानव्यवहितत्वात्तयोः प्रत्यक्षत्वं न स्यादिति चेन्न; अव्यवहितत्वं नाम स्वविषयानन्तर्गतज्ञानान्तराव्यवहितत्वमभिप्रेतम्, तेन समञ्जसं लक्षणम् ।

एवं वा—साक्षात्त्वं स्वकालाकलितवस्तुसत्त्वावबोधकत्वम्; यत्कालीनं ज्ञानं तत्कालसम्बन्धिवस्तुविषयमित्यर्थः । प्रत्यभिज्ञायां तु स्वकालसंम्बन्धिवस्तुविषयत्वमप्यस्तीति न दोषः । वर्तमानाग्न्यनुमानस्य प्रत्यक्षत्वं स्यादिति चेत्, न तस्यापि स्वकालाकलितत्वम्, किन्तु व्याप्तिकालाकलितत्वमेव; अनुमानस्य तु व्याप्तिकालाकलिते शक्तिः कृता; इतरथा भूतानुमाने भविष्यदनुमाने वा शक्त्यन्तरकल्पना स्यादिति न दोषः । अतः सिद्धं साक्षात् प्रतीतिः प्रत्यक्षमिति ।

इति प्रत्यक्षलक्षण प्रकरणम् ।

---

* चोदना प्रामाणमेवेति नियमसमर्थनोपयोगितया लौकिकवाक्याप्रामाण्यं सर्वज्ञानयथार्थतावादं चोपपाद्य चोदनैव धर्मे प्रमाणमिति नियमसमर्थनार्थं प्रत्यक्षस्य भाविनि धर्मे न प्रमाणत्वमिति सूचयन्नाह-साक्षादिति ।

## ( ६ ) संवित्स्वप्रकाशता प्रकरणम् ।

स्वप्रकाशशत्वं नाम स्व ( संबद्ध ) व्यवहारे संविदन्तरनिरपेक्षत्वम् । ननु संविदो व्यवहारः शब्दप्रयोगरूपः, तस्य संविच्छब्देन सह वाच्यवाचकसम्बन्धज्ञानसापेक्षत्वादसंभवि लक्षणम्, नैवम्; स्वसंबद्धव्यवहारे ग्रहणान्तरनिरपेक्षत्वमित्यर्थः । संविद्व्यवहारस्तु वाच्यवाचकसम्बन्धस्मरणमेवापेक्षते । ग्रहणापेक्षा च स्मरणार्था, गृहीतेऽपि सम्बन्धेऽस्मृते शब्दप्रयोगाभावात् । अतः प्रमातृप्रमेययोः स्वव्यवहारे संविदपेक्षत्वादस्वप्रकाशत्वमिति* नातिव्याप्तिः ।

प्रमाणं चानुमानमर्थापत्तिर्वा । अनुमानं तु—घटादिसंविद्व्यवहारो घटादिसंवित्रिबन्धनः तदनन्तरमुपजायमानत्वात्, घटव्यवहारवदित्यादि । अर्थापत्तिस्तु–घटसंविद्व्यवहारो घटज्ञानहेतुतां विना नोपपद्यत इति घटसंविद्विषयसंविद एव सिद्धेः । न चान्योपपत्तिर्वक्तुं शक्यते ।

ननु सर्वत्र व्यवहार्यातिरिक्तसंविद्धेतुक एव व्यवहारो दृष्टः; कथमत्र संविद्व्यवहारे संविद्धेतुकत्वं व्यवहारस्य साध्यते ? नैवम् ; व्यवहार्यातिरिक्तहेतुकत्व यदि दर्शनादेवाङ्गीक्रियते, तर्हि व्यवहार्यविसजातीयहेतुकत्वं व्यवहारस्य दृष्टमिति तदप्यङ्गीक्रियताम् ; ततश्च संविद्व्यवहारस्य संविद्धेतुकत्वमपि न स्यात् । व्यवहार्यविसजातीयहेतुकत्वमत्र त्यजतां कः पक्षपातहेतुः ? क्लृप्तेन कारणेनोपपत्तौ संविद्द्वितयकल्पनमनुचितम् ।

एवं वानुमानम्—संवित् स्वप्रतिबद्धव्यवहाररूपकार्ये सजातीयपरानपेक्षा, तथाभूतपरगतकार्यकारित्वात्, यद्यथाभूतपरगतकार्यकारि

---

* यत्तु—श्रीयुक्तपशुपतिनाथ शास्त्रिभिः प्रभाकरमतेऽप्यात्मनः स्वप्रकाशत्वमेवेति माध्वतात्पर्यचन्द्रिकादिपरीक्षण पूर्वकमुपपादितम्,तदाऽऽपाततः उक्तग्रन्थ विरुद्धमिति प्रतिभाति, तत्त्वगवेषणा यां तु न विरुद्धम् । तदुक्तं बृहत्याम्ः—प्रमातृरूपतातु विज्ञानस्यानाशङ्कनीया; अनाशङ्कितत्वात्; युक्तं चानाशङ्कितम्, कर्मप्रवणत्वादिति न दोषः—इति ।

तत् स्वगततथाभूते कार्ये सजातीयपरानपेक्षं यथा रूपं रूपान्तरानपेक्षम्, परिमाणं वा परिमाणान्तरानपेक्षम्।

ननु लिङ्गलिङ्गितेन लिङ्गेनानैकान्तिकः; यथा धूमेनाग्निरनुमीयते, अग्निना चौष्ण्यम्, तत्राग्निः परत्रानुमानज्ञानकार्यं करोति स्वानुमाने च धूममपेक्षते, नैवम्, तत्रापि विजातीयलिङ्गापेक्षत्वात्। नहि सजातीयशब्देनात्यन्तापरजातिरभिप्रेतः, एवं तर्हि घटज्ञानस्य घटज्ञानान्तरापेक्षाऽस्मन्मतेऽपि नास्ति, ज्ञानविषयज्ञानमेवापेक्षते; अतश्च सिद्धसाधनमिति चेत्, नैवम्; ज्ञानं सर्वमेकजातीयम्; घटज्ञानं पटज्ञानमित्युपाधिभेदाद्भेदः; यत्रतूपाधिमन्तरेण स्वत एव भेदो निरूपयितुं शक्यते, तत्र भेदाभ्युपगमः; अतश्च न सिद्धसाधनता॥

नन्वङ्गुल्यग्रेऽनैकान्तिकत्वम्; यथाचाङ्गुलिः परगत स्पर्शकार्यं करोति, अथ स्वगते स्पर्शेऽङ्गुल्यन्तरमपेक्षते। तथाचोक्तम्—

"अङ्गुल्यग्रं यथात्मानं नात्मना स्प्रष्टुमर्हति।
स्वांशेन ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति॥" इति

नैवम्; यस्य पदार्थस्य यदसाधारणं कार्यं तस्य कार्यस्य स्वस्मिन्नुत्पत्तौ सजातीयपरानपेक्षत्वं साध्यम्; इहतु स्पर्शकार्यमंगुल्या नैवासाधारणम्, अवयवान्तरेणापि स्प्रष्टुं शक्यत्वात्। व्यवहाराख्यन्तु कार्यं ज्ञानस्यैव; रूपव्यवच्छेदोऽपि रूपस्यैव; मानव्यवहारोऽपि परिमाणस्यैव; अतो न कश्चिद्दोषः।

परप्रकाश्यत्वे यदनुमानम्—परापेक्षत्वाद्गुणत्वाद् व्यवहार्यत्वादात्मगुणत्वादित्यादि, तत् सर्वं धर्मिग्राहक प्रमाणविरुद्धत्वाद् बाधितविषयम्; ज्ञानस्य स्वत एव सिद्धिः, न ज्ञानान्तरेणेत्युक्तत्वात्। तदुक्तम्—"स्वत एव यदुत्पद्यते न तत्र परापेक्षेति," "धीकर्मणः सिद्धिमभ्युऽपगच्छता ऽवश्यं धीत्वेनापि सिद्धिरुपेया" इति। परप्रकाश्यत्वनिराकरणेऽप्यनुमानं व्यतिरेकिरूपमस्ति, अनुभूतित्वात् प्रकाशत्वात्-ज्ञानत्वात्-व्यवहारहेतुत्वादित्यादि, एतच्च नासाधारणम्, सपक्षाभावाद्विपक्षाभावाच्च।

यच्चोक्तम्—किं स्वस्य प्रकाशः स्वप्रकाशः, किंवा स्वश्चासौ प्रकाशश्च इत्यादि, तदतिमन्दम्; प्रकाशशब्देन व्यवहारहेतुत्वमुच्यते; घटप्रकाश इति घटव्यवहारहेतुरित्यर्थः। स्वप्रकाश इति स्वयमेव स्वव्यवहारहेतुरित्यर्थः। अतः स्वयंप्रकाशा संविदिति सिद्धम् ॥

इति नन्दीश्वरस्य प्रभाकरविजये संवित्स्व
प्रकाशाख्यं प्रकरणम्।



## ( ७ ) मनःसद्भावतदणुत्व प्रकरणम् ।

नयविवेकाख्यो ग्रन्थोऽभ्यसनीयः सम्यक्ज्ञानोत्पत्त्यर्थम् । इदानीं मनस्सद्भावोऽणुपरिमितत्वं च साध्यते । बुध्यादिकं तावत् कार्यम्; तस्यात्मसमवायित्वेऽसमवायिकारणत्वेन द्रव्यान्तरसंयोग एवास्थेयः । तथाहि—बुद्ध्यादि कार्यं स्वसमवायिकारणद्रव्यान्तरसंयोगासमवायि कारणकम्, नित्यद्रव्यगतानित्यविशेषगुणत्वात् पार्थिवपरमाणुगतरूपादिवत्; तद्द्रव्यं मनः शब्दाभिधेयम्; तच्च नित्यमित्यास्थेयम् । इतरथा तस्यापि कार [ ण ] कल्पना प्रसंगात् । नित्यं च द्रव्यमणुरूपं विभुरूपं वा भवति । तस्यच विभुत्वमयुक्तम्, संयोगाभवप्रसंगात्; संयोगस्य साक्षाद्वा परम्परया वा क्रियैव कारणम्, संप्रतिपन्ने संयोगे तथा दर्शनात् । नच नैरन्तर्यमात्रं संयोगः, गुणगुणिनोरपि संयोगप्रसंगात् । नच द्रव्यनैरन्तर्यम्, अवयवावयविनोर्व्यभिचारात् । अप्राप्तयोर्द्रव्ययोरेव प्राप्तिः संयोगः; सच विभुनोर्न संभवति ।

ननु विभुनोरपि संयोगः संभवति । तथाहि—विभुनी, मिथः संयुक्ते, द्रव्यत्वे सति निरन्तरत्वाद्रज्जुघटवत् ।

तथाहि—आकाशमात्मसंयोगि, तत्संयुक्तद्रव्यान्तरसंयोगि(त्वात्) आत्मसंयुक्तघटसंयुक्तपटवदित्यादि, नैवम्, प्रमाणान्तरबाधितविषयत्वात्; अन्यत्र संयोगमनुगम्य विभुनोः साधयितुं युक्तम् । इतरथा अप्रसिद्धविशेषणत्वाच्छशविषाणवानयमितिवत् । ततश्चान्यत्र संयोगः क्रियाजन्यत्वेन दृष्टः, विभुद्वये तु संयोगे साध्ये कारणाभावात् कार्याभावात् मानबाधाद् बाधितविषयत्वम् । अतो न विभुनोः संयोगः ।*

---

* उक्तं हि कन्दल्याम् :—विभूनां परस्परतः संयोगे का प्रतिक्रिया ? न ह्यसावन्यतरकर्मजः, नाप्युभयकर्मजस्तेषां निष्क्रियत्वात् । नापि संयोगजः, कार्यस्य हि कारणसंयोगिना अकारणेन संयोगजः संयोगो भवति । न चायं विभूनामुपपद्यते नित्यत्वात् ।

यच्च विभुत्वसाधकमनुमानम्—मनो विभु; ज्ञानासमवायिकारण-संयोगाश्रयत्वादात्मवत्, द्रव्यत्वे सति स्पर्शशून्यत्वादाकाशवत्, निरवयवत्वे सति द्रव्यानारंभकद्रव्यत्वादाकाशवत्, द्रव्यत्वे सति भूतत्वादाकाशवत्,स्पर्शशून्यत्वे सतीन्द्रियत्वाच्छ्रोत्रवदित्यादि—तत् सर्वं धर्मिग्राहक प्रमाणविरोधादेवापास्तम्, संयोगार्थत्वान्मनःकल्पनायाः । अतः पारिशेष्यादणुत्वमेव निश्चीयते* । तर्हि पार्थिवाद्यणुरेवास्तु, न द्रव्या-

अस्ति च तेषां संयोगः आकाशममूर्तेनापि द्रव्येण समं संयुज्यते, मूर्तद्रव्यसंयोगित्वात् पटवदित्यनुमानात् प्रतीतः, स चाकारणवान्नित्यः । तस्मादनुपपन्नमिदम् अजः संयोगो नास्तीति, तत्राह—विभूनामिति । यत्र युतसिद्धिस्तत्रैव संयोगो दृष्टः। युतसिद्धिश्चाकाशादिषु नास्ति । अतो व्यापकाभावात् संयोगोऽपि तेषु न भवति । यच्च संयोगप्रतिपादकमनुमानमुक्तं तदसाधनम्; उभयपक्षसमत्वात् । यथेदं विभूनां संयोगं शास्ति तथा ताभ्यामेव हेतुदृष्टान्ताभ्यां विभागमपि। अस्तु द्वयोरप्युपपत्तिः,प्रमाणेन तथाभावप्रतीतेरिति चेन्न; संयोगविभागयोरेकस्य नित्यत्वेऽन्यतरस्यासम्भवादिति द्वयोरप्यसिद्धिः परस्परप्रतिबन्धात् । अथ केयं युतसिद्धिर्यस्या अभावाद्विभूनां संयोगो न सिद्ध्यति, अत्राह सा—पुनरिति । द्वयोरन्यतरस्य वा पृथग्गमनं युतसिद्धिर्नित्यानाम् , द्वयोरन्यतरस्य वा परस्परपरिहारेण पृथगाश्रयाश्रयित्वं युतसिद्धिरनित्यानाम्—इति ।

* उक्तं हि कन्दल्याम्:—विभुत्वे ह्यात्ममनसोः परस्परसंयोगाभावे सत्यात्मगुणानां ज्ञानसुखादीनामनुत्पत्तिः; असमवायिकारणाभावात् । आत्मार्थसंयोगस्य ह्यसमवायिकारणत्वे ऽर्थदेशे ज्ञानोत्पत्तिः स्यात्; असमवायिकारणाव्यवधानेन प्रदेशवृत्तीनां गुणानामुत्पादात् । आत्मेन्द्रियसंयोगस्यासमवायिकारणत्वे शब्दज्ञानानुत्पत्तिः; आकाशात्मकेन श्रोत्रेणात्मनः संयोगाभावात् । न च बहिर्देशे प्रत्ययो नापि शब्दज्ञानानुत्पादः । तस्मादात्मार्थसंयोगस्यात्मेन्द्रियसंयोगस्य चासमवायिकारणत्वे प्रतिषिद्धे परिशेषादात्ममनः संयोगस्यासमवायिकार-

न्तरं मन इति चेन्न, पार्थिवाद्यणूनां द्रव्यारंभकत्वनियमात्; मनसश्च न द्रव्यारम्भकत्वम्, स्पर्शशून्यत्वादिति व्योमटीकायां प्रपञ्चितम्।

किञ्च विवादाध्यासितत्वात् पार्थिवादिद्रव्ययोगो न ज्ञानासमवायिकारणम्, पार्थिवादिद्रव्यसंयोगादितरपार्थिवादिद्रव्यसंयोगवत्, द्रव्यान्तरसंयोगवद्वा। विभुत्वपक्षे दिगात्मसंयोगो वा भवतु, कालात्मसंयोगो वा, किं द्रव्यान्तरेण मनसेति तुल्योऽयमनुयोगः। अतो मनसोऽस्तित्वमणुत्वं च सिद्धम्॥

इति नन्दीश्वरस्य प्रभाकर विजये मनःसद्भावतदणुत्व प्रकरणं समाप्तम्।



---

णत्वं व्यवातिष्ठत। तच्च मनसो व्यापकत्वे न सम्भवतीत्यनुत्पत्तिरेव ज्ञानसुखादीनाम्। अस्ति च तेषामुत्पादः। अतोऽणुपरिणाममेव मन इति।

# ( ८ ) ज्ञानानुमेयता प्रकरणम् ।

* अत्र केचित् ज्ञानमनुमेयमिच्छन्ति; तेषां मते ज्ञानस्यैवाभावः प्रसज्यते तथाहि: —ज्ञानानुमानं हि नार्थसत्तामात्रेण भवितुमर्हति; तस्य तदविनाभावनियमाभावात्, युधिष्ठिराद्यर्थाभावेऽपि ज्ञानं परं वर्तत एव। अथार्थज्ञानं लिङ्गमित्युच्यते, तदपि नोत्पत्तिमात्रेण लिङ्गम्, अनवभास-

---

* भाट्टमतानुयायिनः । व्यक्तश्चायं पक्षो न्यायरत्नाकरे श्लोक वार्तिक व्याख्याने । तद्यथा : —

ज्ञानजन्योऽर्थगतः कश्चिदतिशयः प्राकट्यभासनादिपर्यायपदवाच्यः, स च पाकजन्यौदनादिगतोऽतिशयवदनवगतेऽपि ज्ञाने शक्यते ऽवगन्तुम्; अतः ज्ञानस्य कल्पक इति; सत्यमस्त्यतिशयः, स च प्रत्यक्षेऽर्थे प्रत्यक्षाऽवगतः कल्पयेदपि ज्ञानम्, अनुमानादिषु तु तस्याप्रत्यक्षत्वात् प्राग्व्यहारात्तद्व्याप्तलिङ्गाऽभावादप्रमितस्य चाऽकल्पकत्वान्न ज्ञानं कल्पयेत्, अनुमितेऽपि चार्थे ज्ञातो मयाऽग्निरिति अग्निं ज्ञातमनुसंधत्ते, अतस्तत्वं वक्तव्यं, ज्ञाने प्रमाणमुच्यते ज्ञानक्रियाजनितो ज्ञातुर्ज्ञेयेन सहाऽऽत्मत्वसंबन्धः, स मानसप्रत्यक्षाऽवगतो ज्ञानं कल्पयति सत्यां जिज्ञासायां, यत्रापि च कश्चिदर्थमनुभूय तद्विषयं ज्ञानमकल्पयित्वेव कालान्तरे तमर्थं स्मरति, तत्रापि स्मृतिज्ञानेनैवात्मनोऽर्थस्य च दृश्यद्रष्टृत्वसम्बन्धे निष्पन्ने मानसप्रत्यक्षेण चाऽवगते तद्बलेन च ज्ञाने कल्पिते तस्य ज्ञानस्येन्द्रियादिप्रत्युत्पन्नकारणाऽसम्भवेन स्मृतित्वं निश्चित्य तदनुपपत्या पूर्वाऽनुभवः कल्प्यते; यथोक्तं 'तदैव ह्यस्य संवित्तिरर्थापत्योपजायते' इति । स एवाऽऽत्मनोऽर्थेन संबन्धो दृष्टत्वज्ञातत्वादिपदैरभिधीयत इति । कः पुनरसौ संबन्धः, उक्तं प्राप्तिरिति । येऽपि च स्वप्रकाशां संविदं मन्यन्ते तेषामपि स्वोत्पत्तिसमये संवित्तिः स्वात्मानं कर्त्तारं वेद्यं च भासयति न तु स्वस्य वेत्तुर्वा संवेद्यसंबन्धम्, तस्य तदाऽनिष्पन्नत्वेनाऽसत्त्वा । त् ततो निष्प-

मानेऽप्युत्पन्नानुत्पन्नयोरविशेषात्, नह्यनवभासमानं लिङ्गमनुमापकं भवति। न चार्थज्ञानस्य ज्ञानान्तराधीनमवभासनम्; ज्ञानान्तरानवगमादुक्तरीत्यानवस्थापातात्। तस्मादर्थज्ञानं स्वयं प्रकाशमेवाभ्युपगन्तव्यम्। इति ज्ञानाननुमेयताप्रकरणम्।

---

ज्ञायां संवित्तौ तस्याः कर्त्तुश्च तद्द्वारा विषयसंबन्धे जाते ततो मानसेनैव प्रत्यक्षेणाऽर्थेन सह संवित्तेः संवेत्तुश्च संबन्धोऽवभासत इति अङ्गीकर्त्तव्यम्, संविदन्तरोत्पत्तिसमये व पूर्वसंविदो नष्टत्वान्न तद्धर्मत्वेन संवेद्य संबन्धः शक्यते प्रत्यक्षेण ग्रहीतुमिति सवेत्तृधर्मभूत एव संवेद्यसम्बन्धः कोपि नाम सर्वजनीनः प्राप्तिपर्यायो गृह्यत इति तत एव संवित्तिरूपक्रियाकल्पनासिद्धेरलं स्वप्रकाशतया—इति।

अनेनेदं ज्ञायते यस्याः संविदः स्वप्रकाशत्वं प्राभाकरमतानुयायिभिरङ्गीक्रियते, तस्या एवानुमेयत्वं भाट्टैरूरीक्रियत इति। परन्तु प्रकरणपञ्चिकासिद्धान्तात् स्वप्रकाशसंवित् अनुमेयं ज्ञानं च विलक्षणमवगम्यते। तद्यथा—

ज्ञानमनुमेयमिष्यते। तदनुमाने च नार्थसत्तामात्रं लिङ्गम्; तस्य तदविनाभावनियमाभावात्। अथार्थज्ञानमित्युच्यते, तदपि नोत्पत्तिमात्रेण लिंगम्; अनवभासमाने उत्पन्नानुत्पन्नयोरविशेषात्। न ह्यनवभासमानमेव लिङ्गं लिङ्गिनमनुमापयति। न चार्थज्ञानस्य ज्ञानान्तराधीनमवभासनम्; ज्ञानान्तरानवगमात्। तस्मादर्थज्ञानं स्वयंप्रकाशमेवाभ्युपगन्तव्यम। एतेन ये सुखादिवन्मानसप्रत्यक्षं ज्ञानान्तरमेव ज्ञानसद्भावे प्रमाणमाहुस्ते निराकृताः। स्वयम्प्रकाशत्वेनाप्युपपत्तौ पराधीनप्रकाशकल्पनाऽनुपपन्नेत्युक्तमेव। किन्तर्ह्यनुमीयते ज्ञानम्? ननु न तत्संविदः स्वयंप्रकाशाया भिन्नमुपलभ्यते। सत्यमत एवानुमीयते। ननु किं तदिति? न तद्विद्मः। संविदुत्पत्तिकारणमात्ममनःसन्निकर्षाख्यं तदित्यवगम्य परितुष्यतामायुष्मता—इति।

# (९) क्रियानुमेयता प्रकरणम् ।

*संप्रति क्रियाया अनुमेयत्वं प्रसाध्यते । तत्र तावद्गच्छति देवदत्ते संयोगविभागातिरिक्तं गमनाख्यं वस्तु नेन्द्रियेणोपलभ्यते । ननु प्रत्यक्षैव क्रिया; विवादाध्यासितं गमनादिज्ञानमिन्द्रियजम्, इन्द्रियभावभावित्वात्, रूपादिप्रतीतिवत् , मैवम्; लैङ्गिकत्वेनापि प्रतीतेरुपपत्तेः । कथम् ? ऐन्द्रियिकत्वलैङ्गिकत्वयोः केन विशेषेण लैङ्गिकत्वस्वीकार इति चेत्, अस्त्येव विशेषः; ऐन्द्रियकत्वे इन्द्रियस्य क्रियाग्रहणे शक्तिरकॢप्ता कल्प्यते । लैङ्गिकत्वेऽपि शक्तिकल्पनमविशिष्टमिति चेन्न, सामान्येन व्याप्यस्य व्यापके कॢप्तशक्तित्वात्; इन्द्रियस्यतु सामान्ये न शक्तिः, क्वचित्संयुक्तस्य घटादेर्ग्रहणम्, क्वचि [च] संयुक्तस्यैव गोलकादेः, परमाण्वादेश्चाग्रहणम् , संयुक्तसमवायाच्चक्षुषा रूपादि ग्रहणम् , न रसादीनाम् ; अतो यत्र प्रतीतिस्तत्रेन्द्रियस्य शक्तिरिति प्रतिविषयमिन्द्रियस्य शक्तिकल्पनया लैङ्गिकत्वेनाप्युपपत्तेरैन्द्रियिकत्वकल्पनमन्याय्यम् ।

किंच विवादाध्यासितं गमनादिकमनुमेयम् , क्रियात्वात् आदित्यादिक्रियावत् ; अतोऽनुमेयैव क्रिया । किं तर्हि क्रियानुमाने लिङ्गम् ? विभागपूर्वकः संयोगः । तथाहि—यद्यत्कादाचित्कं तत्तदागन्तुकाज्जायमानं दृष्टं यथा तन्तुसंयोगेभ्यः पटः, अयमप्यागन्तु (क) कारणवानिति । आगन्तुकशब्देनासमवायिकारणमुच्यते ।

ननु समवायेनानैकान्तिकः, तस्य समवायिकारणासमवायिकारणयोरभावात् । कार्यं यत्र समवैति तत्समवायिकारणम् ; असम-

---

*"प्रत्यक्षेणैव हि दृष्टं कर्मस्वरूपं, तदनन्तरं च देशान्तरप्राप्तिं देवदत्तादेरुपलभामहे, न हि नित्याऽनुमेयं कर्मस्वरूपम् , अपरोक्षेणैवाऽवभासात् , नित्याऽनुमेयत्वे च देवदत्ते ऽप्यनुमेयत्वाद्" देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्यादित्येऽपि गतिस्मरण" * मिति भाष्य-

वायिकारणं च कार्यैकार्थसमवायि, कारणैकार्थसमवायि वा; समवायस्य समवायान्तराभावादुभयमपि नास्ति, नैवम्, तस्यापि पिण्डसमवायिकारणादिनोपपत्तेः। तथाचोक्तं प्रकरणपञ्चिकायाम्—"यत एव हि पिण्डस्योदयः समवायिकारणात्तत एव तस्य जातिसमवायोऽपि सम्पद्यते" इति। समवायिकारणासमवायिकारणलक्षणं च समवायव्यतिरिक्तविषयम्, अतो नानैकान्तिकत्वम्।

ननु विभागपूर्वक संयोगस्य स्थाणवादावपि दृष्टत्वात् तत्रापि कर्मानुमानं स्यात्, नैवम्, एकत्र कर्मानुमानेनोभयत्रापि विभाग संयोगोपपत्तेः। यत्कार्यं तत्कारणवदिति व्याप्तिः; न पुनर्यत्र (कार्यं तत्र) कारणमिति। किंच स्वदेशविभागपूर्वकसंयोगस्यैव लिङ्गत्वम्, स्थाणौ तु तदभावात् न कर्मानुमानमिति। किंच लिङ्गत्वे स्थितेऽपि पूर्वकर्मवशादेव विभागसंयोगयोरुप (पत्तौ) कर्मान्तरानुदयाच्च न चलतीति प्रत्ययप्रसङ्गः।

ननु कर्मकारणाभिमतात् प्रयत्नवदात्मनः शरीर संयोगादेव विभागसंयोगयोरुपपत्तौ किमन्तर्गडुना कर्मणा? प्रत्यक्षत्वे तु यथादर्शनं कर्माङ्गीकारेऽपि न दोषः, नैवम्; संयोगो हि स्वाश्रये स्वाश्रयसमवेते वा कार्यमारभत इति नियतम्। यथा तन्तुसंयोगाः स्वाश्रयेषु तन्तुषु पटम्, प्रचयावयसंयोगास्तु स्वाश्रयसमवेतेऽवयविनि महत्त्वम्, तन्तुतुरीसंयोगस्तु स्वाश्रये तुर्याम्, स्वाश्रयसमवेतेच पटे पटतुरी संयोगम्; अतः स्वाश्रयास्वाश्रययोः शरीरदेशयोर्विभाग संयोगौ संयोगहेतुकौ न भवतः; अत आत्मशरीरसंयोगात् स्वाश्रये शरीरे कर्मोत्पद्यते, ततो विभागसंयोगाविति न कर्मविच्छेदः॥

ननु यथा स्वाश्रये कार्यकरस्य संयोगस्य स्वाश्रयसमवेतेऽपि

मनुपपन्नं स्यात्। न च देशान्तरप्राप्त्याऽतीन्द्रियस्यापि कर्मणोऽनुमानं सम्भवति, दृष्टैरेव प्रयत्नवदात्मसंयोगादिभिः कर्मकारणत्वाभिमतैस्तदुपपत्तेरि" ति शास्त्रदीपिकादौ प्रपञ्चितमित्यास्तां तावत्।" इति न्यायरत्नाकरे यत् उक्तं तदिदं यथाप्रकरणप्रञ्चिकं निरस्यति–संप्रतीति।

कार्यकरत्वमङ्गीकृतम् , तथैवास्वाश्रयेऽपि कार्यकरत्वमङ्गीक्रियताम्; स्वाश्रयसमवेतेऽपि हेत्वन्तरं वा कल्प्यताम् ; किमर्थवैशसेन ? नैवम्; अन्वयव्यतिरेकाभ्यां हि स्वाश्रये स्वाश्रयसमवेते च हेतुत्वम् ; तत्रान्यदर्शनापेक्षान्यतरस्य नास्ति । आत्मशरीरसंयोगस्य विभागसंयोगहेतुत्वे नास्त्यन्वयव्यतिरेकाभ्यां हेतुत्वम् , व्यतिरेकाभावात् । आत्मशरीरसंयोगे सत्येव कार्यस्योदयाद्यद्यपि सिद्धोऽन्वयः, तथाप्यात्मशरीरसंयोगस्य सर्वदा सद्भावान्नास्ति तदभावे कार्याभावः । अतश्च बुद्ध्यादीनामात्मकारणत्ववदन्वयव्यतिरेकावसितकार्यकारणभावदृष्टान्तेन तत्समवेतकार्यत्वादित्यादिहेतुनाऽनुमानेन कार्यकारणभावः इति प्रतिवक्तव्यम् । अतोऽन्वयव्यतिरेकापेक्षत्वादनुमानस्यान्वयव्यतिरेकाभ्यां च स्वाश्रये स्वाश्रयसमवेते वा कार्यारम्भस्यावगतत्वात् तदनुसारेणानुमातव्यम्, नास्वाश्रय इति । स्वाश्रयस्वाश्रयसमवेतोदाहरणयोरन्योन्यापेक्षा नास्ति, तुल्यप्रमाणगम्यत्वात्; अतः संयोगस्य स्वाश्रये स्वाश्रयसमवेते वा कार्यारम्भकत्वम्, नास्वाश्रय इति कर्मैवानुमेयम् । अर्थेन्द्रियसंयोगस्यात्मनि ज्ञानजनकत्वात् स्वाश्रय इति नियमो नास्तीति चेन्न, असमवायिकारणप्रयुक्तत्वात् अस्य नियमस्य; अर्थेन्द्रियसंयोगस्तु निमित्तकारणम् । असमवायिकारणस्यापि तर्हि व्यभिचारः, वेणुदन्तविभागसमवायिकारणे नखदलविभागोत्पत्तेः (?) एकत्वेनच खादेः क्रियायाश्च देशविभागसंयोगोत्पत्तेश्चेतिचेदेवं ह्यसमवायिकारण संयोग प्रयुक्त इत्यवगम्य शाम्यतु भवान् । तर्हि तन्तुद्वयसंयोगस्यासमवायिकारणभूतस्य बहुतन्तुव्यापिपटहेतुत्वाद् व्यभिचार इति चेन्न, तत्रापि विभागद्वारेणोत्पादकत्वात् ॥

तथाहि—तन्तुद्वयसंयोगः प्रथमं स्वाश्रये तन्तुद्वये पटभागमुत्पादयति, उत्पन्नेन पटभागेन तन्त्वन्तरस्य संयोगात् स्वाश्रये पटभागान्तरमित्येवमुत्तरत्राप्यूह्यम्; अतो न व्यभिचार इति । एवं त्र्यणुकाद्युत्पत्तावपि द्रष्टव्यम् ॥

अथवा यावतां संयोगानामेकस्मिन् कार्येऽसमवायिकारणत्वं

तावन्तमपेक्ष्य स्वाश्रयादिव्याप्तिः; अत एककार्यत्वेऽपि महापटस्य न व्यभिचारः। अथवा यत्रैकस्मिन् कार्ये एकस्यैवासमवायिकारणत्वम्, तत्रैवेयं व्याप्तिः; प्रयत्नवदात्मशरीरसंयोगस्त्वेक एवेति न कश्चिद्दोषः॥

ननु यदा प्रयत्नवदात्मशरीरसंयोगाच्छरीरे विभागसंयोगोत्पत्तिः, तदा प्रयत्नवदात्मदेशसंयोगाद्देशेपीति न तदतिरिक्तकर्मानुमानम्, नैवम्; देशशरीरविभागसंयोगस्त्वेकं कार्यम्। अत एकस्मिन्नेव कार्ये प्रयत्नवदात्मशरीरसंयोगस्य प्रयत्नवदात्मदेशसंयोगस्य च हेतुत्वात् नात्मशरीरसंयोगस्यास्वाश्रये देशे कार्यकरत्वं आत्मदेशसंयोगस्य वाऽस्वाश्रये शरीर इति।

किञ्चात्मदेशसंयोगस्यापि हेतुत्वं न क्लृप्तम्, कल्पनीयम्; तद्वरं कर्मकल्पनम्। अतः कर्मैव शरीरेऽनुमेयं ततो विभागसंयोगाविति सर्वमुपपन्नम्॥

इति नन्दीश्वरस्य प्रभाकरविजये क्रियानुमान—
प्रकरणं-समाप्तम्

———

# (१०) अतीन्द्रियशक्तिसमर्थनप्रकरणम्।

*सम्प्रत्यतीन्द्रियशक्तिसमर्थनमनुमानेन क्रियते। अग्न्यादिकमजनकदशातो जनकदशायामतिशयवत्, कार्यकरत्वात् कुठारादिवत्।

सर्वकार्याणामदृष्टस्यापि हेतुत्वात्सिद्धसाधनमिति चेन्न, अग्न्यादेर दृष्टातिशयवत्त्वाभावात्। नचाप्यौष्ण्यातिशयेन सिद्धसाधनता, औष्ण्यस्यापि कादाचित्कत्वेन तज्जननेऽप्यतिशयान्तरानुमान प्रसङ्गात्॥

नच प्रतिबन्धकाभावेन सिद्धसाधनता, अभावस्यापि भावान्तरत्वस्य स्थितत्वात्; [भा] वत्वे स्वरूपादीनां चाजनकदशायाम (पि) सम्भवान्न तेषां कारणत्वम्। अजनकदशाविलक्षणस्यैव भावस्य प्रतिबन्धकाभावत्वे नामान्तरेण शक्तिरेवाङ्गीकृता।

भावान्तराभावपक्षेऽपि नाभावाद्भावोत्पत्तिः संभवति। अभावप्रमेयस्य नास्तिज्ञानजनकत्वात् संभवतीति चेन्न, विषयस्याकारणत्वात्; इतरथातीतानागतयोरपि विषयत्वेन कारणत्वप्रसङ्गात्॥

विहिताकारणात् प्रत्यवायोत्पत्तिरिति चेत्, नाकरणात् प्रत्यवायोत्पत्तिः, किन्तु अन्यकारणात्। तदुक्तम्—

"स्वकाले यदकुर्वंस्तु करोत्यन्यदचेतनः।
प्रत्यवायोऽपि तेनैव नाभावेन स जन्यते॥" इति॥

अनुपलब्धेर्नास्तिज्ञानजनकत्वमिति चेन्न, अनुपलब्ध्यभावेऽपि नास्तिज्ञानोत्पत्तिदर्शनात्; दृश्यमानस्यैवार्थस्य 'प्रागयमिह नासीत्'

---

*सर्वभावानां च शक्तिरदृष्टस्वलक्षणापि कार्येणानुमीयते। अग्नेर्यथाभूतादेव दाहो दृष्टस्तथाभूतादेव मन्त्रौषधिप्रणिधाने कार्यं न दृश्यते। न तत्र दृष्टमेव रूपं कारणम्। तस्याजनकावस्थातो विलक्षणत्वाभावात्कार्यानुदयप्रसङ्गात्। यच्च खलु अजनकदशातो निरतिशयं ततः कार्यं नोत्पद्यते कुण्ठादिव कुठारात्। यदा तु तत एव कार्यं दृश्यते तदा तदवस्थातो ऽस्त्येव वैलक्षण्यं तीक्ष्णत्वमिव। अग्नौ च

इति प्रतिपत्तिर्दृश्यते। इदानीमुपलम्भदेवानुपलम्भोऽस्ति; प्रातरनुपलम्भोऽनुवर्तत इति चेन्न, प्रातर्भानादेव तस्य गतत्वात्। एतच्चाभावनिराकरणे प्रपञ्चयिष्यामः। भाववदन्वयव्यतिरेकयोस्तुल्यत्वात्॥

प्रतिबन्धकाभावस्य कारणत्वमिति चेन्न,अन्यथा सिद्धत्वाद् व्यतिरेकस्य॥

तथाहि—मुद्गराभिघाते घटानुत्पत्तिर्न प्रतिबन्धकाभावाभावात्, किंतु मुद्गरपाते सति प्रतिपन्नकारणभूतावयवसंयोगविशेषाभावात्; अ ( न ) न्यथा सिद्धान्वयव्यतिरेकौ हि कार्यकारणभावं कल्पयतः, अन्यथाऽनवस्थाप्रसङ्गात्॥

किंच कार्यविघातकरः प्रतिबन्धक इति सर्ववादिभिरभ्युपेयम्; प्रतिबन्धकाभावस्यापि कारणत्वमभ्युपगच्छताऽवश्यं प्रतिबन्धकोऽभ्युपगन्तव्यः; तथाच सति प्रतिबन्धकसद्भावादेव कार्यविघातोपपत्तौ न तदभावस्य कारणत्वमुचितम्। अन्यथासिद्धत्वात्कल्पनायाः॥

प्रतिबन्धकाभावस्य कारणत्वेऽपि क्वचित्प्रध्वंसः क्वचित्तु प्रागभावः क्वचिदुत्तेजकासहभाव इत्यनेककारणकल्पनं स्यात्, तद्वरं शक्तिकल्पनम्॥

---

कार्यानुदयदशातो विलक्षणं न कार्योदयसमये प्रत्यक्षदृश्यं रूपमुपलक्ष्यते। भवितव्यञ्च वैलक्षण्येन, अन्यथा कार्यानुत्पत्तिप्रसङ्गादिति कार्योदये ऽतीन्द्रियं किञ्चिद्रूपं वह्नेरनुमीयते। तस्य मन्त्रौषधिप्रयोगेण विनाशात् कार्यं नोत्पद्यते। नच वाच्यं मन्त्रौषधादिभिरतीन्द्रियं रूपं न किञ्चिद्विनाश्यते, किन्तु मन्त्रौषधादिसन्निधाने नैव कार्यान्वय इति; कारणावैगुण्ये कार्योदयविघातासम्भवात्। अथोच्यते मन्त्राद्यप्रयोगोऽपि कार्योत्पत्तिनिमित्तं सम्प्रयोगे चाप्रयोगो निवर्तत इत्यस्ति कारणवैगुण्यमिति, तन्न; अप्रयोगस्य प्रयोगाभावरूपत्वात्। सर्वभावानाञ्च भावकारणनियतत्वदर्शनात्। अभावस्य क्वचिदपि कार्ये जनकत्वाश्रयणानुपपत्तेः। यच्च तदतीन्द्रियमग्ने रूपं तच्छक्तिसामर्थ्यादिवाच्यतया लोके प्रतीतम्, तस्य च कार्यानुत्पत्तौ द्वयी गतिरभिभवो वा विना-

ननु शक्तिनाशादिनामपि प्रतिबन्धावस्थायां शक्तेर्विनाशादिकं कल्पनीयम् न; शक्तेर्विनाशोत्पादौ नाभ्युपेयेते, शक्तेः कारणकल्पनाप्रसङ्गात्, शक्तेरपि शक्तिकल्पनाप्रसङ्गाच्च । अतो यावद्द्रव्यभाविनी शक्तिरिति स्थितम् ।

एवंच सति विद्यमानाया एव शक्तेः प्रतिबन्धकसद्भावादेव कार्याकरणम् , तदभावे करणमित्यास्थेयम् ॥

एवंच सति स्वरूपस्यैव प्रतिबन्धकाभावे कार्यकरणम् , तदभावेचाकरणमस्तु; किमनया शक्त्या ?

मैवम्, उपलभ्यमानस्यैव स्वरूपस्य प्रतिबन्धा (नु) पपत्तेः ; अनुपलभ्यमानस्य हि घटस्य कुड्यादिना प्रतिबन्धो दृष्टः । अतः स्वरूपस्यैव प्रतिबन्धकत्वकल्पनायां प्रमाणविरोधः, शक्तेस्तु कार्यकल्प्यत्वादेव कार्यादर्शने प्रतिबन्धकत्वकल्पनायामपि न विरोधः ।

यत्तूक्तम् —कोऽयं शक्तेः प्रतिबन्धः ; किं प्रागभावः, किंवा प्रध्वंसाभावः, आहोस्वित्सहकारिवैकल्यमिति —तस्यैषां पक्षाणामनभ्युपगम एव परिहारः; किंतु कार्यविघात एव; मणिमन्त्रादिसन्निधाने कार्यं नोत्पद्यते तदभावे चोत्पद्यत इति सर्वं सिद्धम् ।

ननु कार्याभावः कारणाभावादेव, नच भवतां कारणाभावः; अस्मन्मतेतु प्रतिबन्धकाभाव ( रूप ) कारणाभावः,.

नैवम् , प्रतिबन्धकस्यैवाभावप्रसङ्गात् । तथाच सति प्रतिबन्ध-

---

शो वा । यत्र कदाचिदपि पुनः कार्यं न दृश्यते, तत्र विनाश एव वस्तुतः । यत्र पुनः प्रतीकारवशेन कार्योदयस्तत्राभिभवमात्रम् । तस्यचैवं वह्न्यादिप्रसिद्धस्य सर्वभावेषु कार्योदयानुकूल्यं कार्योत्पादकानुमानेन परिकल्पनीयम् । तस्यच नित्याश्रयाश्रितस्य नित्यत्वमनित्याश्रयाश्रितस्य तदुत्पत्तिकारणादेवोत्पत्तिः । संस्काराच्चास्यायमेव विशेषः— संस्कारो हि नाम नित्येष्वनित्यो ऽनित्येषु च कारणान्तरायत्त इति । इति प्रकरणपञ्चिका । अतः प्रतिबन्धकाभावकारणाशंकादिकं स्पष्टं न निरस्तम्,अत्र तदपि स्पष्टं निरस्तमिति विशेषः ।

के तद्भावस्य कारणत्वमपि न स्यात्; नहि कारणाभावमात्रस्य प्रतिबन्धकत्वम्; मुद्गराभिघातो घटस्य प्रतिबन्धकः, न मृदाद्यभाव इति व्यवस्थानुपपत्तेः॥ अतोऽनुमानसिद्धस्यातिशयस्येन्द्रियविषयत्वाभावादतीन्द्रियत्वम्॥

नन्वजनकदशायामपि शक्तेरभ्युपगमात् जनकदशायामतिशयत्वं शक्तेर्न स्यात्, नैवम्; प्रतिबन्धावस्थायां शक्त्यवगमो नानुमानायत्तः, किंतु जनकदशातो विलक्षणरूपेणैवानुमानसिद्धस्यैव पश्चादेवं विमर्शो जायते—प्रतिबन्धावस्थायां किं नाश एव युक्तः, उत कार्याकरत्वमेव—इति; ततश्च कार्याकरत्वमेवेति निर्णयो जायते॥ ततः कल्पनालाघवात्कार्याकरत्वमात्रम्, न नाशोत्पादाविति। तेनानुमानमूलत्वादस्य निर्णयस्य न तेनानुमानबाधः। अतः सिद्धमतीन्द्रिया शक्तिरनुमेयेति।

इति नन्दीश्वरस्य प्रभाकर विजये शक्तिसद्भाव-
प्रकरणं समाप्तम्।



## (११) परमाणु समर्थन प्रकरणम्।

सम्प्रति परमाणुसद्भावः साध्यते। अल्पपरिमाणतारतम्यं, क्वचिदवधिमत्, परिमाणतारतम्यत्वात्, महत्परिमाणतारतम्यवत्। नित्यश्चासाववधियुक्तः, अनित्यत्वे तस्यापि कारणवत्त्वेनानवधित्वप्रसङ्गात्। यश्चासाववधिः स परमाणुरिति॥

तथा त्र्यणुकं प्रत्यक्षस्वपरिमाणादल्पतरपरिमाणकार्यद्रव्यारब्धम्, कार्यद्रव्यत्वात्, घटादिवत्। तथा द्व्यणुकम्, स्वावयवारब्धम्, सावयवत्वात्, घटादिवत्—इति।

ननु द्व्यणुकमपि कार्यद्रव्यारब्धं स्यात्, कार्यद्रव्यत्वात्, घटादिवत्; अतो न नित्यरूपपरमाणुसिद्धिः नैवम्; महतः कार्यद्रव्यस्य कार्यद्रव्यारब्धत्वम्।

तर्हि तदेव द्रव्यं कारणवद् दृष्टमिति न द्व्यणुकस्य कारणवत्त्वमपि सिध्यति, तथापि यदि कार्यत्वादेव कारणवत्त्वमनुमीयेत, तर्हि कार्यत्वादेव कार्यद्रव्यारब्धत्वमप्यनुमीयताम्; कः पक्षपातहेतुः? नैवम्; द्व्यणुकस्यापि कार्यद्रव्यारब्धत्वे तस्यापि कार्यद्रव्यारब्धत्वप्रसङ्गेनानवस्था प्रसज्येत॥ अथ क्वचित् कार्यद्रव्यारब्धत्वं नाश्रीयेत, तर्हि प्रथमस्य तथाभावे कः प्रद्वेषः? इति स एव परमाणुः॥

अनवस्थायामपि को दोष इति चेत्, अयमेव दोषः—सर्वेषामवयविनां स्ववयावपरम्परायाः क्वचिदपरिनिष्ठितत्वादनन्तावयवप्रसङ्गः। भवत्विति चेत्, तर्हि सर्षपमहीधरयोरपि तुल्यपरिमाणत्वप्रसङ्गः; अवयवाल्पत्वावयवमहत्त्वाभ्यां हि सर्वत्रावयविनां परिमाणाल्पत्वमहत्वव्यवस्था; अनन्तावयववत्त्वे तु सर्षपोऽप्यनन्तावयवः, पर्वतोऽपि तथैवेति तुल्यपरिमाणत्वमपरिहार्यमेव; अतोऽनवस्थादिदोषप्रसङ्गेन द्व्यणुकस्य न कार्यद्रव्यारभ्यत्वं शक्यानुमानम्॥

ननु—कार्यस्य कारणद्रव्यानुमानमप्यनवस्थाप्रसङ्गेनैव न घटते नैवम्; अन्यतरव्याप्तिपरित्यागे प्रसक्ते कार्यद्रव्यारब्धत्वमेव परित्याज्यम्, नतु कारणवत्त्वमात्रव्याप्तिः, तस्या अवश्यं भावित्वात्॥

तथाहि—कार्यं करणवदिति सामान्यव्याप्तिमङ्गीकृत्य तत्कारणमपि कार्यरूपमेवेति द्वितीयानुमानेन साध्यते; अतः सामान्यानुमानविरोधे तदुपजी [वक] विशेषानुमानं ते परित्याज्यं स्यात्, नतूभयोरपि परित्यागः।

भवतु; द्व्यणुकं परमाणुकं चोभयमपि नाश्रीयताम्, आद्यमेव प्रत्यक्षं महिमगुणशाल्येवावधिर्भविष्यति, परमाणुमात्रकानुमानमपि सिद्धसाधनं भवतु, नैवम्, विकल्पासहत्वात्॥

तत्किमाद्यप्रत्यक्षं सावयवमनित्यम्, उत निरवयवं नित्यम्? यदि सावयवमनित्यम्, तदा तस्यावयववत्त्वेन कारणवत्त्वेन च द्रव्यान्तरानुमानप्रसङ्गीकृतः परमाणुः; निरवयवं नित्यमित्याश्रीयमाणे उत्तरोत्तरसावयववानित्यकार्यद्रव्यस्य कारणत्वं न स्यात्। यद्घटादिकार्यद्रव्यकारणं पिण्डादि तत्तत्सावयवमनित्यंच दृष्टम्; निरवयवस्य चाकाशादेर्द्रव्यारम्भकत्वमपि न दृष्टम्; अतो निरवयवनित्येना (द्य) प्रत्यक्षेणोत्तरोत्तरकार्यारम्भो न सिद्ध्यति।

अथ सत्यपि तथा दर्शने उत्तरोत्तरकार्यदर्शनबलान्निरवयवं नित्यमाद्यप्रत्यक्षं कारणमिति कल्प्येत, तर्हि परमाणुरपि नित्यो निरवयव एव कारणं भवतु, द्व्यणुकमपि नित्यद्रव्यकार्यं भवत्विति तुल्यचर्चम्।

नन्वस्माकं दृष्टविरुद्धनित्यनिरवयवस्य कार्यद्रव्यसमवायिकारणत्वे कल्प्यमानेऽप्युभयसंप्रतिपन्ने आद्यप्रत्यक्षे धर्ममात्रमेव कल्पनीयम्, तव तु द्व्यणुकमपरमाणुरूपधर्मिकल्पनं कृत्वा तत्र निरवयवनित्यकारणत्व धर्मकल्पनमपीति न तुल्यत्वम्, सत्यम्; दृष्टस्वरूपे आद्यप्रत्यक्षे न विरुद्धधर्मकल्पनमुचितम्, क्लृप्तहानिप्रसङ्गात्; अदृष्टस्वरू (पं) परमाण्वादिकमेव कल्प्यते; अतः क्लृप्तहानिपरिहारेणाक्लृप्तकल्पनमेव न्याय्यम्; इतरथा पर्वतधूमस्य कारणत्वेनाग्निकल्पने लाघवमस्तीत्यग्न्यनुमानोच्छेदप्रसङ्गः॥

अथ धूमजातीयस्याग्निसम्बन्धस्यावगतत्वात् क्लृप्तहानिप्रसङ्ग इति चेत्, तर्ह्यत्रापि द्रव्यस्य सावयवानित्यत्वस्वभावस्य क्लृप्तत्वात् तत्परित्यागे क्लृप्तहानिः समैव। एवं क्रियाशक्तीन्द्रियादिष्वपि लाघवादनुमानं न स्यात्। अत एवोक्तम्–"प्रमाणवलकल्प्यानि सुबहूनि" इति।

अतः कार्यद्रव्यं समवायिकारणवदित्येतावदेवानुमातव्यम्; न महत्कार्यद्रव्यं कारणवत्, नापि कार्यद्रव्यारब्धमिति॥

किंच कार्यद्रव्यं कारणवदिति सामान्यव्याप्त्युपजीवनेन—महत्कार्यद्रव्यं कारणवत्, कारणमपि कार्यद्रव्यमेव दृष्टम्—इत्यादि निक्षेप्तव्यम्; तथाच सति महत्त्वादेर्व्यतिरेकाभावात्प्रयोजकत्वं न सम्भवति।

तथाहि—इतरसामग्रीसंभवेऽपि यस्य व्यतिरेकात्कार्यानुत्पादो दृष्टः तस्यैव धर्मस्य प्रयोजकत्वम्; अत्रतु कार्यत्वे सत्यपि महत्त्वादिधर्माभावात् कारणवत्त्वाभावः क्वचिदपि न दृष्टः; अतः कारणवदित्येतदेव प्रयोजकम्।

किंच कार्यद्रव्यं कार्यद्रव्यारब्धमितीयं व्याप्तिरुभयोरपि वादिनोर्व्यभिचारिणी; तवतु आद्यप्रत्यक्षे उत्तरकार्यारम्भके व्यभिचारः, मम तु परममहतः कार्यात् त्र्यणुकात् द्व्यणुकसिद्धिः, द्व्यणुककार्यात्परमाणुसिद्धिः॥

ननु परमाणवस्त्र्यणुकमेवारभन्ताम्, किमन्तर्गडुना द्व्यणुकारम्भेण? नैवम्; महतः कार्यद्रव्यस्याल्पपरिमाणकार्यद्रव्यान्तरारभ्यत्वं दृष्टमिति तदनुसारेण त्र्यणुकस्य कार्यद्रव्यमेव कारणमनुमेयम्, विशेषव्याप्तेः परित्यागायोगात्; परमाणवश्च नित्या इति न तैस्त्र्यणुकारम्भः॥

ननु—अनित्याः, परमाणवः, मूर्तत्वात्, घटादिवत्; तथा सावयवाः, परमाणवः, मूर्तत्वात्, घटादिवत्; तथा अनित्याः सावयवाः, परमाणवः, सर्वदिक्संबन्धत्वात्, घटादिवत् इत्येभिर्निराकृताः परमाणवः कथं सिध्यन्ति? सिध्यन्त्येव तैरेव हेतुभिः।

एतेषां हेतूनां पक्षधर्मत्वं विनाहि न हेतुत्वमिति एतेषां पक्षवृत्तित्वादिसाधकप्रमाणैरेव परमाणवोऽपि सिद्धा भवन्ति, अन्यथैतेषां हेतुत्वमेव न स्यादिति भावः ॥

तथाहि—तत्र पक्षीकृताः परमाणवः सिद्धा असिद्धा वा? यदि सिद्धाः, तदा धर्मिग्राहकप्रमाणबाधात् बाधितविषया हेतवः; अथासिद्धाः, तर्ह्याश्रयासिद्धत्वादेव न साध्यसाधकाः ॥

अथ प्रसङ्गापादनमुखेन हेतवः साध्यं साधयन्ति; तर्हि पक्षभूतपरमाण्वङ्गीकारेणचेत्प्रसङ्गस्तथापि धर्मिग्राहकबाध एव; अनङ्गीकारेणेति चेत्, तदापि पूर्वोक्ताश्रयासिद्धिस्तदवस्थैव। प्रसङ्गापादनमपि नानुमानविलक्षणं प्रमाणम्, किंतु अनुमानस्यैव प्रयोगभेद मात्रम्; साधनदूषणलक्षणान्यपि तान्येवेति न विधान्तरं प्रसङ्गापादनमिति सर्वमुपपन्नम्। अयंतु नित्यकारणवादः ब्रह्मकारणत्वपक्षे प्रकृतिकारणत्वपक्षे च तुल्यः अतः परमाणुकारणवादे ये दोषास्ते सर्वेषामपि समाना इत्युपरम्यते।

इति नन्दीश्वरस्य प्रभाकरविजये परमाणुसद्भाव प्रतिपादनप्रकरणं समाप्तम्

---



## (११) कार्यव्युत्पत्ति समर्थनम् ।

इदानीमाद्या व्युत्पत्तिः कार्य एवेति प्रतिपाद्यते । प्रवृत्तावेवाद्या व्युत्पत्तिः ; प्रवृत्तिश्च कार्यज्ञानादेव भवति ॥

ननु—न तावदवश्यं प्रवृत्त्यधीनैव व्युत्पत्तिः ; पुत्रस्ते जात इति वाक्यश्रवणसमनन्तरं श्रोतुर्मुखविकासं व्युत्पित्सुः पश्यति ; तदा मुखविकासस्य हर्षहेतुकत्वेन तस्य स्वस्मिन्नवगतत्वात् हर्षोऽस्तीति निश्चिनोति ; हर्षस्य च प्रियार्थावगमपूर्वकत्वेनावगमात् प्रियार्थज्ञानमनुमिनोति ; प्रियार्थज्ञानं च शब्दानन्तर्यात् शब्दहेतुकमेवेत्यवधारयति; तत्र कः प्रियार्थ इति पर्यालोचनायां प्रत्यक्षेण पुत्रजननं दृष्ट्वा हेत्वन्तरादर्शनाच्च पुत्रजन्मैवानेन शब्देन प्रतिपादितमिति समाकलयति ; तत्र प्रतिपदमावापोद्धाराभ्यां पदार्थविशेषोऽपि निश्चीयत इति सुकरैव सिद्धेऽप्याद्या व्युत्पत्तिः । अथोच्येत पुत्रजन्मैवास्य प्रियमितिपारिशेष्यावधारणं न शक्यते, अतीतानागतहर्षहेतूनामपि तदैव संभवादिति । तन्न, दृष्टे हेतौ हेत्वन्तरसंभावनामात्रेण तत्र हेतुत्वत्यागो न युक्तः ; अतिप्रसङ्गात् , "हेतुदर्शनाच्च" इत्यधिकरणविरोधाच्च । अतः पुत्रजन्मैव हर्षहेतुरिति शक्यः पारिशेष्यनिश्चयः ।

किंच पुत्रजनने सत्येव बहुशः प्रयोगदर्शनात् हर्षहेत्वन्तरेष्वप्रयोगात्पुत्रजननरूपो हर्षहेतुविशेषोऽर्थ इति निश्चीयते । किंच यद्यपि न शक्यः पारिशेष्यनिश्चयः, तथापि हर्षहेतुमात्रनिश्चयात् सिद्धस्यापि शब्दार्थतावगमात्सिद्धः कार्यव्यभिचारः ॥

किंच यद्यपि प्रवृत्त्यधीनैवाद्या व्युत्पत्तिः , तथापि न कार्यविषयेवेति नियमः ; यदा वृद्धमातुरं वा प्रति विनोदार्थं— नद्यास्तीरे फलानि सन्ति—इति वाक्यं प्रयुङ्क्ते, तदा अन्यः कश्चिदेतद्वाक्यमर्थाच्छ्रुत्वा तत्र गत्वा फलमाहरति ; तत्राऽन्योऽव्युत्पन्नस्तद्दृष्ट्वा तत्प्रतिपादने तस्य वाक्यस्य सामर्थ्यं कल्पयति ; अतो न कार्य एव व्युत्पत्तिरिति नियमः ॥

किंच—कोऽयं राजा? पाञ्चालराजः—इत्यादिषु प्रश्नप्रतिवचनादिषु दृष्टः कार्यव्यभिचारः। किंच यद्यपि कार्य एवाद्या व्युत्पत्तिः, तथा प्युत्तरकालं बहुशः सिद्धार्थे लौकिकवैदिकप्रयोगदर्शनात्सिद्धार्थकार्य विशेषं परित्यज्यार्थमात्रे शक्तिनिश्चयो युक्तः; यथा गोशब्दस्यैकस्यां व्यक्तौ चेष्टां दृष्ट्वा तत्रैव शक्तिकल्पने सति तेन व्यक्तिमात्रानिश्चय-प्रसङ्गे पश्चाद्व्यक्त्यन्तरेऽपि बहुशः प्रयोगदर्शनादनुगतं सामान्यमेव गोशब्दार्थ इति कल्प्यते, एवमत्रापि सिद्धकार्यविशेषं परित्यज्यार्थ-मात्रे शब्दस्य शक्तिकल्पनमुचितम्॥

किंच कार्यज्ञानात्प्रवृत्तिरितीदमेव दुर्घटम्, सर्वत्रेष्टोपायज्ञानादेव प्रवृत्तिदर्शनात्; यत्रेष्टोपायत्वमवगतं तत्र लौकिकाः प्रवर्तन्ते, यत्र तन्नास्ति न तत्र प्रवर्तन्त इत्यन्वयव्यतिरेकाभ्यामिष्टसाधनज्ञानमेव प्रवर्तकम्।

अथोच्येत—अनन्यथासिद्धावन्वयव्यतिरेकौ हि कार्यकारणभावं कल्पयतः; अत्र चेष्टोपायज्ञानात् 'ममेदं कार्यम्' इति ज्ञानमुत्पद्यते, तज्ज्ञानात्स्वतन्त्रः प्रवर्तत इति, तन्न; इष्टोपायज्ञानादेव प्रवृत्त्युपपत्तौ किमर्थमन्तर्गडूयमानं कार्यज्ञानं मध्ये निक्षिप्यते?

नन्विष्टोपायज्ञानमात्रं प्रवृत्तौ व्यभिचरति, अतीतेऽनागते चेष्टो-पायज्ञानं न प्रवर्तयति; अतः कार्यज्ञानं निक्षिप्यते; कार्यंच कृतिसा-ध्यम्; अतीतमनागतं च कार्यमेव न भवति, कृतत्वात्करिष्यमाणत्वा-च्च; अतोऽतीतानागतकार्यज्ञानेषु न व्यभिचारः शङ्कनीयः; अतोऽव्य-भिचारित्वात्कार्यज्ञाननिक्षेपः, एवं तर्हीष्टोपायज्ञानं कार्यज्ञानोत्पादक-मित्यङ्गीकृतम्; तत्र चातीतानागतयोरिष्टोपायज्ञानं कार्यज्ञानं नोत्पाद-यतीति कार्यज्ञानं कारणं न स्यादिति तुल्यचर्चम्॥

अथ कृत्यर्हेष्टोपायज्ञानात् कार्यज्ञानमुत्पद्यत इति विशेषयाम इति चेत्, तर्हि तत एव प्रवृत्तिरिति किं कार्यज्ञानव्यसनेन?

किंच कृत्यर्हेष्टोपायातिरिक्ते कृत्युद्देश्ये न तन्निरूप्यते; अतः कार्य ज्ञानं प्रवर्तकमिति वदतां नामान्तरेणेष्टोपायज्ञानविशेषात्प्रवृत्तिरित्युक्तं भवति—इति,

अत्रोच्यते—कार्यधीत एव प्रवृत्तिः ; तदन्वयव्यतिरेकित्वात्प्रवृत्तेः, इष्टोपायज्ञानस्याप्यन्वयव्यतिरेकौ स्त इति चेन्न ; कार्यज्ञानोत्पादकत्वे-नान्यथासिद्धत्वात् ॥

तथाहि—यत्र कार्यज्ञानं नास्ति, केवलमिष्टोपायज्ञानमेव, तत्राती-तानागतवर्तमानोपायज्ञानेऽपि प्रवृत्तिर्न दृश्यते ॥

नन्वयं व्यभिचार इष्टोपायतायाः कार्यधीजननेऽपि समः, नैवम् ; कृत्युद्देश्यस्येष्टोपायस्य कार्यधीहेतुत्वम् , अतोऽतीतादिव्यावृत्तिसि-द्धिः ; द्विधा ( ह्यु ) पायताधीः—अतीताद्याकारा कार्याकारा च । तत्र कार्याकारातः प्रवृत्तेः कार्यधीतः प्रवृत्तिरुच्यते ॥

ननु पूर्वापरविरुद्धमुच्यते—पूर्वमिष्टोपायज्ञानात्कार्यज्ञानमुत्पद्यते, कार्यज्ञानात्प्रवृत्तिरित्युक्तम् ; इदानीमिष्टोपायधीवेद्यमेव कार्यमित्यु-क्तम्, नैवम् ; इष्टोपायताऽऽकारोल्लेखादेव कार्यपर्यन्तं वेद्यमिति-कृत्वा इष्टोपायताज्ञाप्यत्वमुक्तम्, नतु भिन्नज्ञानाङ्गीकारेण ; यथा आकृतिव्यक्त्योरेकज्ञानविषयत्वेऽप्याकृतिज्ञाप्यत्वं व्यक्तेरुक्तं भाष्यका-रेण, शब्दादाकृतिः आकृतितो व्यक्तिः—इति । अतः कृत्युद्देश्यत्वं नाम धर्मः कृत्यर्हेष्टोपायपर्यवसानसिद्धोऽङ्गीकर्तव्यः । तदेव च कार्यमित्यु-च्यते ॥

ननु कृत्यर्हेष्टोपायज्ञानात् प्रवृत्तिरस्तु, किं कृत्युद्देश्यत्वाख्येन धर्मे-णाङ्गीकृतेन ? नैवम्; यदि तथाविधस्य कृत्यर्हता कृतिप्रयोजनत्वं विना-पि सिध्यति, ततः कृत्युद्देश्यत्वधर्मानङ्गीकारो युक्तः; नच तथा संभ-वति; तथाविधेषु कृतिसंबन्धः कृत्युद्देश्यतयैव संभवति, नान्यथा ; अतो मानसानुमानाभ्यां कृतीप्सितधर्मत्वाख्यो धर्मोऽवश्याङ्गीकार्यः । इष्टोपायत्व [मे] व कार्यत्वमिति न शक्यते वक्तुम्, कार्यत्वेष्टोपायत्व-योरत्यन्तभेदस्य स्फुटत्वात् । कार्यत्वंच इष्टे च वर्तते इष्टसाधने च, तथाऽनिष्टपरिहारेऽपि वर्तते, इष्टोपायत्वं तु न तथेति तयोर्भेदः स्फु-टतर एव; इष्टसाधनत्वं तु फलप्रतियोगिकम्, का ( र्यत्वं ) च कृतिप्रतियोगिकम् । नचैकाधिष्ठानतया तयोरभेदः पितृपुत्र

त्वयोरिव; यथैक एव देवदत्तः स्वपित्रपेक्षया पुत्रः, स्वपुत्रापेक्षया पिता; पितृत्वप्रयुक्तं च कार्यमन्यदेव, पुत्रत्वप्रयुक्तं चान्यत् ; नच तत्रैकाधिष्ठानतया तयोरभेदः। किञ्च रूपभेदादपि तयोर्भेदः; एकस्य फलसाधनत्वं रूपमितरस्य कृतिप्रयोजनकत्वम् कथं विभिन्नरूपयोरभेदः? विलक्षणाकारबुद्धिबोध्यं वस्तु विलक्षणमिति हि प्रसिद्धिः।

किंच अन्योन्यव्यभिचारादपि भेदः—कार्यत्वं सुखेऽपि विद्यते, तत्रेष्टोपायत्वं नास्ति; इष्टोपायत्वं भूतभोजनादावपि वर्तते, तत्र कार्यत्वं नास्ति ; अतोऽन्योन्यव्यभिचारादपि भेदः।

किंच इष्टसाधन ( तै ) व कार्यतेति यो वदति [ सः ] प्रष्टव्यः, किं कार्यशब्दानुविद्धबोध्ये कृतिजन्यतातिरेकेण कश्चिद्धर्मः स्फुरति, नवा ? यदि न स्फुरति, तर्ह्यपुरुषार्थेऽपि कृतिजन्ये कार्यधीः स्यात् ; स्फुरति चेत्स कृतिप्रतियोगी धर्मः कार्यबुद्धिशब्दयोरर्थोऽङ्गीकृतः। किंच कार्यशब्दस्तावत्सभागशब्दः—कृतिस्तु प्रकृत्यर्थः, तत्प्रयोजनं प्रत्ययार्थः; अतः प्रकृत्यर्थसंब ( द्ध ) एव प्रत्ययेन सोऽर्थोऽभिधातव्यः; इतरथा सामर्थ्याभावात्प्रकृतिप्रत्ययसमभिव्याहारो न स्यात्। अतएव "समर्थः पदविधिः" इति। अतः कृतिसंब (द्ध) रूपमेव कार्यशब्देनाभिधातव्यम्। अतः कार्यशब्द एवेष्टसाधनकार्ययोर्भेदे प्रमाणम्। अथेष्टसाधनतापि कृतिजन्याधिष्ठानतया कृतिनिरूप्या; तस्मात्तदभिधानेऽपि कृतिसंबन्ध उपपद्यत इति, तन्न; कृतिसंबन्धाभिधानेऽङ्गीकृते साक्षात्कृतिसंबन्धाभिधायित्वमेवाश्रयणीयम्, व्यवधाने प्रमाणाभावात् ; नच कृतिनिरूप्यधर्माभिधानं युक्तम् ; अत इष्टसाधनकार्ययोः स्फुटतर एव भेदः। एतत्सर्वमभिप्रेत्योक्तं प्रकरणपञ्चि ( कायाम् )—

"फलसाधनता नाम ( परा ) [ प ] रा [च] कार्यता।" इति।
तत्सिद्धम्—कार्यता कृतिसाध्यत्वम्, फलसाधनता पुनः॥
कारणत्वं फलोत्पादे ते भिद्येते परस्परम्॥ इति।

यत्तूक्तम्—आद्या व्युत्पत्तिः सिद्धेऽपि युक्ता 'पुत्रस्ते जातः' इत्या-

दाविति, तदयुक्तम् ; यद्यपि 'पुत्रस्ते जातः' इति वाक्यश्रवणसमनन्तरं श्रोतुर्मुखविकासो दृश्यताम्, मुखविकासश्च हर्षकार्य इति निश्चीयताम्, हर्षश्च प्रियार्थज्ञानकार्य इति; तथापि हर्षहेतुविशेषनिश्चयो न घटते ।

न भवतु विशेषनिश्चयः, एतावतैव शब्दार्थत्वनिश्चयः कार्यव्यभिचारश्च सिद्धः ; नैवम् ; इदंच हर्षहेत्वनुमानमात्रम् ; हर्षहेतुमात्रं च न 'पुत्रस्ते जातः' इति वाक्यास्यार्थः , किंतु पुत्रजननरूपहर्षविशेष एव ; यावद्विशेषनिश्चय (श्च) न शक्यते, हर्षहेतूनां बहूनां संभवात् । नच पारिशेष्याद्विशेषधीः; नहि कस्यचिज्जन्तोरेकमेव प्रियम् ।

अथ यद्यपि बहूनां प्रियार्थानां संभावनास्ति, तथापि पुत्रजननविशेषस्य दृष्टत्वात्पारिशेष्यनिश्चय इति,नैवम्, तत्रैव बहूनां हर्षहेतूनां दृष्टत्वात् ; यथा पुत्रजननं हर्षहेतुस्तथा सुखप्रसवः प्रियायाः , पितामहादीन्प्रति ऋणापाकरणम्, तथा पुन्नाम्नो नरकात् त्रायत इति पुत्रः, अतो नरकात्त्राणम् , अव (न्ध्या) त्वं चेत्येवमादीनां बहूनां दृष्टत्वान्न विशेषावधारणम् । किंच वर्तमान एव हर्षहेतुः हर्षोत्पादक इति नियमो नास्ति, अतीतादीनामपि स्मृतिद्वारेण हर्षहेतुत्वेन स्वस्मिन् दृष्टत्वात्, परहर्षेऽपि तथैव संभवात्; किंच विरक्तश्च कश्चित्सुवर्णादिलाभे सत्यपि स्ववैराग्यनिमित्तं सर्वसन्न्यासं स्मृत्वा हसति विकसितमुखश्च दृश्यते, तत्र वर्तमानोऽपि सुवर्णादिलाभो न हर्षहेतुः ।

यदुक्तम्—बहुशः पुत्रजनने स [ ति ए ] वं विधवाक्यप्रयोगात्पुत्रजन्मविशेषावगतिरिति, तदतिमन्दम् ; बहूनां हर्षहेतूनां संभवा- [ त् यदाऽनि ] श्चयः, तदा प्रयोगान्तरेऽपि ( तत्सं ) भवाद्–निश्चय एव । यदि प्रयोगान्तरे निश्चयहेतुरस्ति, सच प्रथममेव वक्तव्यः ।

यत्तूक्तम्—यद्यपि प्रथ ( मं ) कार्य एव व्युत्पत्तिः, तथाप्युत्तरकालं बहुशः सिद्धेऽपि प्रयोगदर्शनादुभयानुगतेऽर्थमात्रे शक्तिर्युक्त ति ; तदयुक्तम् ; गङ्गाशब्दस्य नदीविशेषवाचकत्वे निश्चिते उत्तर कालं तीरादिषु बहुशः प्रयोगदर्शनादुभयानुगतेऽर्थान्तरे शक्तिकल्पना प्रसङ्गात् । तीरादिषु लक्षणादिवृत्त्या प्रयोगोपपत्तेर्न शक्तिकल्पनेति चेत्

अत्रापि तर्हि लक्षणया सिद्धार्थप्रयोगोपपत्तेन कल्प्यतामिति तुल्य-चर्चः। गोपदे तु आनन्त्यव्यभिचाराभ्यां व्यक्तौ कल्पनानुपपत्तेः सामान्ये कल्पनमिति विशेषः।

यदुक्तं यद्यपि प्रवृत्तावेव व्युत्पत्तिः, तथापि कार्यज्ञाननियमो नास्ति; यथा वृद्धादीन् प्रति विनोदार्थ—नद्यास्तीरे फलानि सन्ति—इति कार्यपदरहित वाक्य प्रयोगे यादृच्छिकः कश्चित्प्रवर्तत इति; तच्च नैवम्, तत्रापि कार्यज्ञानादेव यादृच्छिकस्य प्रवृत्तिः, प्रत्यक्षाद्यवगतोदकादौ यथा पिपासोः कार्यबुद्धिरुत्पद्यते, तथात्रापीति। तत्र शब्दात्कार्यबुद्धिर्नास्ति, तथापि व्युत्पित्सोः शब्दहेतुकत्वभ्रमः; सोऽपि पश्चान्निवर्तते; अतो न कार्यव्यभिचारः प्रवृत्तेः। यत्तूक्तम्—अर्थान्तरान्वितपरत्वकल्पनयापि कार्यपरत्वसिद्धेः वृथैव कार्यरूपविशेषे शक्तिगौरवमिति, तदपि न; प्रवृत्तेः कार्यनियतत्वेन कार्यान्वित एव कल्पनं युक्तम्, नत्वर्थान्तैरान्विते; कल्पनागौरवमपि विपरीतमेव, अस्माकं तु कार्यमात्रे शक्तिरेकविषया, तव त्वर्थान्तरान्विते महाविषये शक्तिरिति; यथा वह्निरिति नियते दाहकार्ये, न द्रव्यमात्रे शक्तिः। एवं कार्यपरत्वद्वारेण परस्परान्वयोऽपि व्युत्पन्न इति न प्रतिपदाधिकरणविरोधः। नच लोक वाक्यवत्परस्परान्वयपरत्वं वेदान्तानामभ्युपगन्तुमुचितम्, विवक्षाभावात्; अतः कार्यपरत्वमेव वेदान्तानाम्। ननु सिद्धार्थ व्यपदेशेषु लौकिकेषु मुख्यार्थाभावादन्विताभिधानं न स्यात्, सत्यम्; तत्र वक्त्रभिप्रायादेवार्थनिश्चयः, नान्विताभिधानात्; संकेतपदेभ्य इव सिद्धार्थेऽपि व्युत्पत्तेरितरविभक्त्यर्थानां व्युत्पत्तिरस्त्येव, तथास्य शब्दस्यायमर्थ इत्यप्यस्ति, तथा प्रश्नप्रतिवचनादिष्वपि। तत्र पदीया व्युत्पत्तिः, आद्या कार्यविषयैवेति सिद्धं कार्य एव व्युत्पत्तिरिति॥

इति नन्दीश्वरस्य प्रभाकरविजये कार्यव्युत्पत्ति-
समर्थनप्रकरणं समाप्तम्

# (१२) अर्थापत्त्यनुमानवैषम्यसमर्थनम्

इदानीमर्थापत्तेरनुमानाद् भेदः समर्थ्यते। एषा चार्थापत्तिः दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यर्थकल्पना, यथा जीवतो देवदत्तस्य गृहाभावदर्शनेन बहिर्भावस्याद्दृष्टस्य कल्पनेति।

केचिदियमनुमानान्न भिद्यत इति वदन्ति। तथाहि—प्रमेयाधिक्यात्सामग्रीभेदाद्वा प्रमाणान्तरत्वमुपपद्यते प्रत्यक्षादीनामन्योन्यम्; इहतु उभयमपि न दृश्यते। यद् बहिर्भावादि लक्षणं प्रमेयं तदनुमानेनाप्यवगन्तुं शक्यते।

तथाहि—देवदत्तो बहिर्देशसंयोगी, गृहाभावे सति विद्यमानत्वात्; यो यो गृहाभावे सति विद्यमानः स स बहिर्देशसंयोगी,यथाऽहम्।तथा जीवतो गृहाभाववान् कालः, क्वचित् भाववान्, जीवद्गृहाभाववत्त्वात्, यो यः कालो जीवद्गृहाभाववान्, स स क्वचिद्भाववान्; यथा ममैव कालः। अतोऽनुमानगम्यत्वादर्थापत्तेः प्रमेयान्तरं नावशिष्यते। पक्षधर्मताद्यङ्गप्रदर्शनेन सामग्रीभेदोऽपि न निरूपयितुं शक्यते।

किं च अर्थापत्तेरनुमानत्वमप्यनुमानेन साध्यते। विवादाध्यासितार्थापत्तिरनुमानम्, अविनाभावबलेनोपजायमानत्वात्, धूमादग्निज्ञानवत्।

नन्वन्यथा नोपपद्यत इति कल्पनाऽर्थापत्तिः, अतोऽविनाभावेनोपजायमानत्वमसिद्धम्।

नैवम्; बहिर्भावं विना गृहाभावोऽन्यथा नोपपद्यत इति कथमवगम्यते ? जीवतो गृहाभावस्य बहिर्भावेन नियमदर्शनादिति चेत्, तर्ह्यविनाभाव एवान्यथानुपपत्तिशब्देनाप्युक्तो भवतीति नासिद्धत्वम्।

अथ यत्र सामान्यतो विशेषतो वाऽन्वयग्रहणं तत्रानुमानम्, यत्र तु तदुभयं नास्ति शक्त्यादौ, तत्रार्थापत्तिरिति, तन्न; तत्रापि केवलव्यतिरेकिरूपानुमानस्य सामग्री (त्व) संभवात्।

अन्वयाभावेन तन्नानुमानमिति चेत्, तर्हि केवलान्वयिनो व्यति-

रेकाभावेन प्रमाणान्तरत्वं स्यात्। भवत्विति चेन्न, स्पर्शनप्रत्यक्षस्य रूपवत्त्वाभावात् प्रत्यक्षात्प्रमाणान्तरत्वप्रसङ्गः—इति।

अत्रोच्यते—यदर्थान्तरेणापादितसन्देहं कल्पयति, साऽर्थापत्तिः। अनुमाने तु न सन्दिग्धं सन्देहापादकं वा गमकम्; अतः सामग्रीभेदादेव भेदः। अत्र चानुपपत्तिशब्देन सन्देह एवोच्यते। अनुपपद्यमानमपि सन्दिग्धं सन्दिग्धविशेषणं वोच्यते। अत्र कः सन्देहहेतुः? जीवनं च गणितागमादिसिद्धमपि प्रायशो गृहाधिकरणतया दृष्टमिति—गृह एव नियतमिति भ्रमो जातो यस्य, तस्य गृहाभावदर्शने पूर्वनिरूपितधर्मविरहात्सन्दिग्धं जीवनम्। किंच आगमसिद्धस्यैव जीवनस्य गृहाभावनिश्चये गृहवद्बहिर्देशोऽपि देशत्वाच्चैत्राभाववानिति व्याप्ति भ्रमाद् बहिर्देशाभावस्तावदवगतः। एवं सकलदेशीयजीवनाभावभ्रमाद्भवति जीवनभावाभावविषयः संशयः; एवं संशयरूपानुपपत्तिव्युदासाय जीवनमेव बहिर्देशसंबन्धितया कल्प्यते।

यच्चोक्तं न सन्दिग्धं कल्पकं दृष्टमिति, व्याप्तं वा गमकं कुत्र दृष्टम्? धूमादौ दृष्टमिति चेत्, तर्ह्यत्रापि जीवनादौ दृष्टमेव। अनुपपद्यमानादन्यत्र सर्वत्र न दृष्टमिति चेत्,तर्हि तत्रापि लिङ्गादन्यत्र न दृष्टमेव। अथान्यत्रादृष्टमपि व्याप्याद्व्यापके प्रतीतिदर्शनबलेन व्याप्तं गमकमित्यङ्गीक्रियत इति चेत्, तर्ह्यत्रानुपपद्यमानादुपपादके प्रतीतिदर्शनबलादभ्युपगम्यत इति समानचर्चम्।

यत्पुनरेतदभिहितम्—सन्देहस्य कारणनिरसाद्वा, अन्यतरपक्षावधारणाद्वा निरास इति; तदत्राप्यस्त्येव। तथाहि—नात्र जीवनस्य भावाभावौ सन्दिह्येते, जीवनमेव बहिः स्थि (त) तया निश्चीयत इत्यन्यतरपक्षावधारणमस्त्येव। यस्तु संशयहेतोरेव निश्चयहेतुत्वं नोपपद्यत इति; तदप्यत्र नास्ति, भिन्नहेतुकत्वादुभयोः; पूर्वनिरूपितधर्मवैधुर्यं ह्यत्र सन्देह हेतुः, बहिर्भावकल्पनं निर्णयहेतुरिति।

यत्पुनरेतदुक्तम्—अनुमानेऽपि सन्दिग्धमेव गमकम्,धूमस्याप्यग्न्यकल्पने सन्दिग्धत्वादिति; नैष दोषः; धूमस्तु कल्प्याकल्पनात्सन्दिग्धः,

जीवनं तु कल्प्याकल्पनमन्तरेणापि गृहाभावदर्शनात्सन्दिग्ध-विशेषः। एवमेव सन्देहोत्पादस्तन्निर्णयोत्पादश्च लोकप्रसिद्ध एव। अन्तर्भाववादी चैवंविधं ज्ञानं न नास्तीति वक्तुं शक्नोति; प्रामाण्यं च नापाकरोति; केवलमन्तर्भावस्यैव प्रतिपाद्यमानत्वात्। अतोऽनुमानेऽनिश्चितं गमकम्, अर्थापत्तौ तु सन्दिग्धमिति विशेषः।

किंच यत्सन्दिग्धं गमकं जीवनम्, तदेव गम्यं बहिः संबन्धितयाऽर्थापत्तौ; अनुमाने त्वन्यदेव गमकम्, अन्यदेव गम्यम्;अतोऽत्यन्तं भेदः। यदपीदमुद्भावितम्—बहिर्भावो गृहाभावेनानुमीयत इति, तदतिमन्दम्; नहि गृहाभावमात्रं लिङ्गम्, मृतेष्वपि दृष्टत्वात्। नच जीवनविशिष्टम्, जीवनस्य प्रथममवगमप्रसङ्गात्; विशेषणभूतं च गृहेऽविद्यमानत्वाद् बहिः संबन्ध्येव सद्गम्यम्; अतो लिङ्गावगमसमय एव बहिर्भावस्यावगमान्न गम्यमवशिष्यते। यद्यर्थापत्तिगम्यस्यानुमानेनाप्यवगन्तुं शक्यत्वात्तदन्तर्भावः, तर्हि दृष्टस्वलक्षणस्यानुमानस्य प्रत्यक्षेणाप्यवगन्तुं शक्यत्वादतिप्रसङ्गः; अतः सामग्रीभेदाद् भेद इति सर्वं समञ्जसम्।

अत्र केचित्—पीनो देवदत्तः, दिवा न भुङ्क्ते—इति श्रुतार्थापत्तौ—रात्रौ भुङ्क्ते इति शब्द एव कल्प्यत इति—वदन्ति। तथाहि—पीनत्वानुमितं भोजनं दिवा निषिद्धं रात्रिभोजनकल्पनया शब्दसंजल्पितया सविकल्पिकया शाम्यतीति शब्द एव प्राथम्यलाघवाभ्यां कल्प्यते, कल्पितेन तेनोपस्थापितादर्थादनुपपत्तिशान्तेः; नन्वेवमैन्द्रियकसविकल्पकज्ञानेऽपि प्राथम्यलाघवाभ्यां शब्दस्यैव कल्पनयाऽनैन्द्रियकत्वप्रसङ्गः, नैवम्; तिर्यगादिषु शब्दशून्येष्विन्द्रियस्यार्थ एव शक्त्यवधारणान्न शब्देऽपि सामर्थ्यकल्पनं युक्तम्। अथ दृष्टार्थापत्तावर्थ एव शक्तिः क्लृप्तेति नात्रापि शब्दः कल्पनीयः, नैवम्; तत्राप्युपपादकेऽर्थे शक्तिकल्पनम्, नार्थमात्रे;अत्र शब्द एवोपपादक इति शब्द एव श्रुतार्थापत्तौ कल्प्यः। अत एव विश्वजिदादौ स्वर्गकामपदाध्याहारः, द्वारम् इत्यादौ संव्रियताम् इति पदाध्याहारः; ऊहेऽपि 'सूर्याय जुष्टं निर्वपामि' इति शब्द एव कल्प्यते, तथाऽनुषङ्गेऽपि। अपि च पचत इति प्रयुक्ते ओदनादिपूरकपदाश्रवणे प्रत्यक्षौदनेनानुपपत्तिशान्तिः स्यात्;

नच तथा दृश्यते, तस्माद्वाक्यगतानुपपत्तेस्तत्पूरकशब्द एव कल्पनीय इति। एतदेवाभिप्रेत्य भाष्यकारेण "दृष्टः श्रुतो वा" इति श्रुतपदं प्रयुक्तमिति।

तदिदमनुपपन्नम्; श्रुतार्थापत्तावप्यर्थ एव कल्पनीयः, न शब्दः; शब्दविशिष्टसविकल्पके तद्विशिष्टोऽर्थ एव वेद्यः। ननु न शब्दस्यापि वेद्यत्वम्; तस्य स्मृतिसमारूढत्वात्, अतोऽत्र शब्दविशिष्टकल्प्याभिनिवेशेऽप्यर्थस्यैव कल्प्यत्वम्, न शब्दस्यापि; अतो न शब्देन कल्पितेनानुपपत्तिशान्तिः। अथ बोधकावस्थशब्दस्य कल्प्यत्वादनुपपत्तिः शाम्यतीति चेत्, नैवम्; तत्रापि प्राप्ताप्राप्तविवेकेनार्थस्यैवानुपपत्तिशमकत्वम्, न शब्दस्य। किंच अर्थपरावस्थस्य कल्पनेऽर्थे शब्दे च शक्तिकल्पनमिति गौरवप्रसंगात् वरमर्थमात्रस्यैव कल्पनम्। अपिच दृष्टार्थापत्तेरुपपादकार्थमात्रे शक्तिं दृष्ट्वा; श्रुतार्थापत्तौ तूपपादकबोधकशब्दे शक्तिकल्पनमिति वैरूप्यमप्यसांप्रतम्। किंच अन्यत्र सविकल्पके स्मृत्यारूढशब्दो दृष्ट इत्यत्रापि तथाविधस्यैव कल्पनाप्रसङ्गः, न मितिस्थस्य; एवं च विश्वजिदादावप्यर्थासद्भावाद्वाक्यर्थापरिपूर्तिरित्यर्थ एव तत्रापि कल्प्यः।

यत्तूक्तमूहादौ शब्दकल्पना दृष्टेति, सत्यं दृष्टा; तत्र साक्षाच्छब्द एवोपपादकः, नतु शब्दस्योपपादकबोधकत्वम्। तथाहि—आभिधानिकं प्रकाशकं प्रकृतौ मन्त्राणां कार्यतया क्लृप्तम्; अतो विकृतावपि तत्कार्योपपत्तये सूर्यायेति शब्दप्रक्षेपो युक्तः। एवमनुषङ्गेऽपि। यत्पुनरेतदभिहितं पचतीत्युक्ते प्रत्यक्षसिद्धस्यौदनस्यान्वयेनानुपपत्तिशान्तिप्रसङ्ग इति, तच्च नैवम्; तत्र विवक्षावधारणाभावादनन्वयः, न शब्दाभावात्। अतोऽवधारितायामन्वयोऽस्त्येवेति सर्वमुपपन्नम्॥

इति नन्दीश्वरस्य प्रभाकरविजये अर्थापत्त्यनुमान-
वैषम्यसमर्थनम्

# (१३) अभावप्रमाणनिरासप्रकरणम् ॥

इदानीमभावाख्यं प्रमाणं निराक्रियते। 'नास्ति' इति व्याहारव्यवहारौ प्रमाणान्तरमन्तरेण नोपपद्येते इति चेन्न, भूतलादिविशेषादेवोपपत्तेः। ननु च 'नास्ति' व्यवहारस्य 'अस्ति' व्यवहारविषयभूतं भूतलं नावलम्बनम्, 'अस्ति नास्ति' व्यवहारयोरेकविषयताप्रसङ्गात्, नैवम्; अभावाख्यं प्रमेयमस्तीति वादिनाऽपि तदभावस्य 'अस्ति' व्यवहारविषयत्वमङ्गीकृतम्; इतरथाऽभावाभावस्य नास्तित्वप्रसङ्गात्; ततश्चाभावोऽपि नास्तित्व्यवहारे विषयो न स्यात्।

अथ यद्यप्यभावस्य स्वापेक्षया 'अस्ति' व्यवहारविषयत्वम्;तथापि घटापेक्षया 'नास्ति' व्यवहारविषय इति, एवं तर्हि भूतलमपि स्वापेक्षया 'अस्ति' व्यवहारविषयः, घटापेक्षया 'नास्ति' व्यवहारविषय इति किं तत्त्वान्तराभ्युपगमेन? भूतलमात्रस्य विषयत्वात्। ननु तर्हि कः केवलपदार्थः? यदि भूतलमेव, तर्हि घटवत्यपि प्रसङ्गः; अथ ततोऽन्यत्, अङ्गीकृतं तर्हि तत्त्वान्तरम्। अथैकाकि भूतलमिति चेत्, ऐकाकि चासहायमिति सहायाभावाङ्गीकारप्रसङ्गः। अथ स्मर्यमाणेऽपि प्रतियोगिनि भूतलमेवाऽऽलम्बनम्; गृह्यमाणे तु स्मरणाभावादेव न 'नास्ति' व्यवहारः, एवं तर्हि देशान्तरस्थे गृह्यमाणे देशान्तरे तदभावव्यवहारो न स्यात्। अथ तत्रापि देशान्तरसम्बन्धिरूपस्य प्रतियोगित्वात्तत्संबन्धितया स्मरणासंभवान्नास्ति व्यवहारो न स्यात्। अथ जिज्ञासिते प्रतियोगिनि भूतलमालम्बनम्; सघटेतु प्रतियोगिनो ज्ञातत्वान्न जिज्ञासेति, नैवम्; प्रिये पुत्रादौ ज्ञातेऽपि पुनर्ज्ञानेच्छासंभवात् व्यवहार प्रसङ्गात्। जिज्ञासायाश्च विलक्षणव्यवहारहेतुत्वं विलक्षणार्थज्ञानहेतुतया। दृष्टम्, अतो घटजिज्ञासायां 'नास्ति' व्यवहारहेतुत्वं भूतलातिरिक्तघटाभावपरिच्छेदेनैव भवतीत्यङ्गीकृतं तत्त्वान्तरम्।

अथ तदतिरिक्तसामग्रीविशिष्टं भूतलमालम्बनम्। सघटे तु

तदभावान्न प्रसङ्ग इति, किमिदं तद्व्यतिरिक्तत्वम्? यदि ततोऽन्यत्वम्, तर्हि संसृष्टावस्थायामपि तत्संभवात् 'नास्ति' व्यवहारप्रसङ्गः; यदि तदभावः, स्वीकृतमेव तर्हि तत्त्वान्तरत्वम्। अतोऽन्येतद्भूतलमात्रविज्ञानं न कारणम्, अपि तु भूतलबुद्धिविशेषः। स च संसृष्टबुद्धेर्विलक्षण एव; नवाप्यभावज्ञानम्, अभाववादिभिरभावज्ञानकारणत्वेन विलक्षणबुद्धेरङ्गीकारात्; अतो यस्याभावज्ञानोत्पादकत्वमङ्गीकृतम्, तेनैव व्यवहारोऽस्त्विति, नैवम्; अभावज्ञानोत्पादकस्य ज्ञानस्य न भूतलातिरिक्तविषयत्वम्; भूतलमात्रविषयत्वेऽपि न संसृष्टावस्थायामभावज्ञानजनकत्वम्, सहकारिवैकल्यात्, घटानुपलब्धिस्तु सहकारिणी, तेनानुपलब्धिविशिष्टं भूतलमात्रज्ञानमभावज्ञानोत्पादकम्। एवं तर्हि तदेव व्यवहारकारणमस्त्विति चेत्, नैवम्, विषयवैलक्षण्याभावात्।

तथाहि—भूतलमात्रस्यैवानुपलब्धिसहकारिसमवधानाज्ज्ञानान्तरोत्पादकत्वमुपपद्यते, यथैकस्यैव घटस्य चक्षुस्पर्शनभेदाज्ज्ञानभेदः; अतः संसृष्टबुद्धिविलक्षणबुद्ध्युत्पादादभावज्ञानहेतुत्वमुपपद्यते; तव तु भूतलमात्रज्ञानादनुपलब्धिसहकृताद्विलक्षणव्यवहारो नोपपद्यते, विलक्षणव्यवहारस्य विलक्षणविषयकृतत्वेन दृष्टत्वात्, यथा घटपटव्यवहारयोः। अतोऽभावज्ञानकारणेनैवाभावव्यवहार इति न प्रतिबन्दिसिद्धिः।

अत्रोच्यते—नास्तिव्यवहारस्य नास्ति-ज्ञानकारणकत्वेऽपि-नास्तिज्ञानस्य कारणत्वेन तन्मात्रबुद्धिरभाववादिनाप्यङ्गीकृता; सा च संसृष्टज्ञानादभावविशिष्टज्ञानाच्च विलक्षणत्वेनाङ्गीकृता; तदुक्तम्—

"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया॥" इति

अतो वस्तुसद्भावग्रहणरूपतन्मात्रबुद्धिस्वसंवेदनादेव विलक्षणव्यवहारोपपत्तिः; अतो न घटवत्यपि प्रसङ्गः, तत्र विलक्षणतन्मात्रबुद्धेरभावात्।

यद्यपि कारणभेदाद् भेदः; तथापि विषयकृत एव भेदो व्यवहारहेतुरिति चेत्, सत्यम्; विलक्षणतन्मात्रबुद्ध्यङ्गीकारादेव तद्विषयस्यापि वैलक्षण्यमवश्याङ्गीकार्यम्, विषयविषयिभावस्य भेदात्। अतो विलक्षणव्यवहार उपपद्यते । यथा विलक्षणतन्मात्रबोधाद्विलक्षणाभावज्ञानोत्पत्तिः, तथा विलक्षणव्यवहारोऽस्माकमिति न दोषः ।

यत्तूक्तम्—कारणभेदमात्रेण ज्ञानभेदे न विलक्षणव्यवहारो दृष्टः, यथाचाक्षुषस्पार्शनयोरेकविषययोः—इति, तदतिमन्दम्, चाक्षुषपटज्ञानात्-शुक्लः पटः इत्यपि व्यवहर्तुं शक्यते, स्पार्शनात्तु-मृदुः पटः---इति, अतस्तत्रापि विलक्षणव्यवहार इति । किञ्च विलक्षणव्यवहारो विलक्षणार्थपरिच्छेदादित्यपि मन्दम्;-घटाभावो नास्ति, घटो नास्ति---इति विलक्षणव्यवहारयोरभावमात्रपरिच्छेदानिबन्धनत्वेनानैकान्तिकत्वात् । अथ तत्रार्थैक्याद् व्यवहारवैलक्षण्यमेव नास्तीत्युच्यते, एवं तर्हि---भूतलमस्ति, घटो नास्ति---इति व्यवहारयोरप्यर्थैक्याद् वैलक्षण्यं न स्यात् ।

नन्वस्माकं प्रतियोगिजिज्ञासायां तन्मात्रधियो विशेषः, जिज्ञासायाश्च विक्षणव्यवहारहेतुत्वं विलक्षणार्थपरिच्छेदादेव; अतो विलक्षणाभावज्ञानाङ्गीकारप्रसङ्गः ? नैवं'जिज्ञासायाश्च व्यवहार हेतुत्वम्, किंतु तन्मात्रबुद्धि विशेष एव व्यवहार हेतुः। केचित्तन्मात्रबुद्धिविशेषाः प्रतियोगिजिज्ञासानन्तरभाविनः, केचिच्च नेति, येच प्रतियोगिजिज्ञासानन्तरभाविनो विशेषाः, ते व्यवहार हेतवः । प्रतियोगिजिज्ञासा चात्रोपलक्षणकोटिनिविष्टा,न व्यवहारकारणम् , भवतामपि प्रतियोगिजिज्ञासाया अभावज्ञानहेतुत्वं नास्ति, किन्तु तत्कारणभूततन्मात्रबुद्धावुपलक्षणत्वमेव, वस्तुसद्भावग्रहणं प्रतियोगिस्मरणं च कारणमित्युक्तत्वात् ।

यत्तूक्तम्—प्रिये ज्ञातेऽपि पुनर्ज्ञानेच्छा संभवति, अत उपलक्षणत्वेऽपि व्यभिचार इति, तद्भवतामपि समानम्। तथाप्युच्यते---न प्रतियोगिजिज्ञासामात्रमुपलक्षणम्, किंतु अन्यत्र ज्ञायमाने प्रतियोगिनि जिज्ञासेति विशेषतव्यम्, अतो न कश्चिद्दोष इति ।

ननु भवतां तन्मात्रबुद्धेः किं कारणम्? नचैकं नियतमुपलभ्यते, क्वचिन्मुद्गरप्रहारः, क्वचिद्विभक्तो घटः, क्वचित्कपालमाला,क्वचिच्चूर्णीभूतोऽवयवः, क्वचिच्च देशान्तरस्थितिः; अतोऽनियतहेतुकत्वादहेतुकमेव तन्मात्रज्ञानम्; अस्मन्मते त्वभावोऽभावज्ञानकारणमिति,

मैवम्; भवतामप्येकत्र प्रागभावः, अन्यत्र प्रध्वंसाभावः, अपरत्रेतरेतराभावोऽभावज्ञानहेतुरित्यनियतहेतुत्वमपि सममेव। अथ घटप्रतियोगिकाभावत्वेनैकत्वेऽप्यवान्तरभेदं कल्पयित्वा कारणभेदः समर्थ्यते, तर्ह्यस्माकमपि घटतन्मात्रबुद्धिरूपेणैकत्वेऽप्यवान्तरभेदः कल्प्यताम्। अथ न जातिभेदः—अभावानामेव कारणभूतानां भावविरोधित्वेनैकत्वमेव, तर्हि भावाना मप्यनेकेषामभावविरोधित्वेनैकत्वेनाभावविज्ञानं न संभवति।

योग्यानुपलब्धिर्हि कारणत्वेनाभिमता; तस्याश्च सत्तया कारणत्वम्, ज्ञायमानतया वा। न तावज्ज्ञायमानतया, तस्या अप्यभावत्वेनानुपलब्ध्यन्तरग्रहणप्रसङ्गेनावनवस्था प्रसङ्गात्; नच सत्तया हेतुत्वम्, तदभावेऽप्यभावज्ञानदर्शनात्। उपलभ्यमानेऽपि देवदत्ते—प्राङ् नासीदयमिह—इति दर्शनानुपलम्भादेवानुपलम्भो निरस्तः।

ननु प्रत्यक्षोपलम्भात्प्रत्यक्षानुपलब्धिमात्रस्यैव निरासः, नानुपलब्धिमात्रस्य; अतस्तत्र तत्स्मृत्यनुपलम्भस्य संभवादभावज्ञानमिति, नैवम्; तस्याप्यभावेऽप्यभावज्ञानदर्शनात्। तथाहि—मध्यन्दिने दृष्टो देवदत्तः–प्रातर्नास्त्येवायमिह–इति सायंबुध्या तत्र तदा मध्यन्दिनस्मृत्या स्मृत्यनुपलम्भो निरस्तः, सायं ग्रहणेनैव ग्रहणानुपलम्भोऽपि निरस्त एव; अतोऽनुपलब्धिमात्रस्यैव व्यभिचारान्न सत्तया हेतुत्वम्।

अथोपलम्भात्तत्कालीनानुपलम्भबाधः, न प्रातरनुपलम्भस्य; अतः प्रातरनुपलब्ध्या प्राङ् नासीदिति नास्तित्वं गृह्यते, तन्न; उपलम्भकत्वेन तत्प्रागभावरूपानुपलम्भोऽप्येक एव; अत उपलम्भे जातेऽनुपलम्भमात्रस्य नाशः; प्रातर्वर्तित्वोपाधिरपि प्रातर्नाशादेव ( नष्टः ); अतो यावदुपलम्भक्षणं प्रसक्तः प्रागभाव उपलम्भादेव नश्यति; इत-

स्था प्रध्वंसेऽपि मुद्गरप्रहारकालीन एव घटो नष्ट इति पूर्वकालीनो घटोऽनुवर्तत; नचैतद्दृष्टमिष्टं वा ।

ननु यद्यप्युपलम्भोदयादनुपलम्भनिरासः; तथापि प्रातरुत्पत्तियोग्योपलम्भस्याप्यनुत्पन्नत्वात्तदनुपलम्भो वर्तते; ततोऽभावग्रहणमस्त्विति, नैवम्; नित्यतुच्छत्वात्तस्योपलम्भस्य तत्प्रतियोगिकोऽप्यनुपलम्भो नास्ति ।

तथाहि—नच तस्य प्रातरुत्पत्तिः,नच पूर्वम्, नच पश्चादित्युपलम्भजातीयत्वमेव तस्य नास्ति; अतोऽनुपलम्भस्य सत्तया कारणत्वमपि दूरोत्सारितमेव । अतोऽभावाख्यं प्रमाणान्तरं नास्तीति सिद्धम् ।

इति नन्दीश्वरस्य प्रभाकरविजये अभावनिराकरण-प्रकरणम् ।



## (१४) अथ सत्तासामान्यनिराकरणप्रकरणम् ।

इदानीं सत्तासामान्यं निराक्रियते*। नहि द्रव्यगुणकर्मसामान्येषु द्रव्यगुणकर्मसु वा—सत्—इत्यनुवृत्ताकारप्रतिपत्तिः। नन्वनुवृत्तिप्रत्ययमन्तरेणैकशब्दप्रयोगो नोपपद्यते तथाहि—नानाभूतेषु वृक्षघटलोष्टादिषु—सत् सत्—इत्येकशब्दप्रयोगो दृश्यते; एकशब्दप्रयोगस्त्वेकनिबन्धनमन्तरेण नोपपद्यत इत्यर्थापत्त्याऽनुमानेन वा एकनिबन्धनत्वे सिद्धे तत्प्रतीतिपूर्वकत्वमेकशब्दप्रयोगस्य. नैवम्; व्यभिचारित्वात्, एको हि गोशब्दः सास्नादिमति भूमौ रश्म्यादौ च।

गोशब्दस्य भिन्नशब्दतत्त्वैव वृत्तिः, एकत्र गृहीतसंबन्धस्यान्यत्र प्रयोगाभावात्; सच्छब्दस्य तु न प्रतिविषयं व्युत्पत्त्यपेक्षा गवादिशब्दानामिव, तन्न, तथाऽप्यन्यथोपपन्नत्वात्; उपाधिरप्येकशब्दप्रयोगस्य कारणं भवत्येव; यथा पाचकः, वाचकः, मीमांसक इत्यादि। एवं तद्दुपाधि विशेषो वक्तव्यः। श्रूयताम्—क्वचिद् गुणयोगः शुक्लादिशब्देषु, क्वचिच्च क्रियायोगः पाचकादिशब्देषु; अत्र तु प्रमितिक्रियायोग एवोपाधिः। अतश्च सर्षपमहीध्रादिषु प्रयोगः;

---

* सत्तासामान्यानभ्युपगमे ब्राह्मणादिजातिव्यवस्था कथमुपपद्यते इति प्रश्नस्तु प्रकरणपञ्चिकायामेवं समाहितः। यथा—"अनयैव च दिशा ब्राह्मणत्वादिजातिरपि निवारिता। नहि नानापुरुषव्यक्तिषु पुरुषत्वादर्थान्तरभूतमेकमाकारमात्मसात्कुर्वन्ती मतिराविर्भवति। नहि क्षत्रियादिभ्यो व्यावर्तमानं सकलब्राह्मणेष्वनुवर्तमानमेकमाकारमतिचिरमनुसन्दधतोऽपि बुध्यन्ते। यदप्याहुः, यद्यप्यापातसंजातया धिया ब्राह्मण्यं नावसीयते; तथापि ब्राह्मणमातापितृसम्बन्धानुसन्धानप्रभवायां बुद्धौ तच्चकास्तीति, तदपि च स्वमानसविसंवादि। अनुसन्धानोऽपि मातापितृसम्बन्धं को जात्वेकमाकारमवबोद्धुं प्रभवति? यच्चोपदर्शितम् यथा विलीनमाज्यं तैलाद्व्यतिरिच्यमानं गन्धग्रहणसह-

शशविषाणादिष्वप्रयोगश्चेति नाऽव्याप्तिः। नन्वेवं भूतभविष्यतोरपि सत्त्वप्रसङ्गः, तयोरपि प्रमाणसंबन्धस्य विद्यमानत्वात्।—सत्—इत्यत्र प्रकृतिमात्रस्योपाधिः, न प्रत्ययपर्यन्तस्य; भूतभविष्यतोरपि प्रकृत्यर्थो विद्यत एव, न वर्तमानप्रत्ययार्थः; अतो यस्य स्वरूपं वर्तमानं तत् वर्तते—इत्युच्यते, यस्य स्वरूपं विनष्टं तत् भूतम्—इत्युच्यते, यस्य स्वरूपमुत्पत्स्यते तत् भविष्यत्—इति त्रिधा व्यपदेशोपपत्तिः।

यत्तु निद्रादिषु प्रमाणाभावात्सत्त्वसन्देहो न स्यादिति, तत्रापि यस्य कस्यचित्प्रमाणसंबन्धोऽस्ति नास्तीति सन्देह इत्युपेक्षणीयम्। ननु प्रमितिक्रियायोगः संविदि नास्ति; स्वयंप्रकाशत्वादेव; अतः संविदोऽसत्त्वप्रसङ्ग इति, नैवम्; यद्यपि संवित्स्वयंप्रकाशा; तथापि स्वयंप्रकाशत्वग्राहकप्रमाणसंबन्धोऽस्तीति नासत्त्वम्; परेण परसंविदनुमानाच्च।

ननु प्रमितिनानात्वेन नैकं निबन्धनमस्ति; तद्वरं भिन्नानामेव स्वरूपाणामुपाधित्वम्, नैवम्; यद्यपि प्रमितीनां स्वरूपतो नानात्वम्, तथापि प्रमितिसामान्यमेकमस्तीति तदेव निबन्धनमस्तु। प्रमितिसामान्यं नास्तीति येषां पक्षः, तेषामपि प्रमात्रैक्यनिबन्धनमेकत्वम्। प्रमातॄणामपि नानात्वादुपाधित्वं नोपपद्यत इति

---

कारिणा चक्षुषैव भिन्नमवगम्यत इति, तदपि न सुन्दरम्; नहि तदानीं चाक्षुषस्य संवेदनस्य विषयातिरेकः, किं त्वनुमानमेव तत्र सर्पिषः; यस्तु निपुणदर्शी सूक्ष्ममपि रूपमीक्षितुं क्षमः, स चक्षुषैवाज्यमपि प्रत्येति, न गन्धग्रहणमपेक्षते।

नन्वेवं बह्वहीनम्, किंनिबन्धनो हि तदानीमाहवनीयादिसाध्यकर्मसु केषांचिदधिकारो नान्येषाम्? किं निबन्धना च ब्राह्मणशब्दप्रवृत्तिव्यवस्था? अत्रोच्यते; अनादौ संसारे जन्यजनकभावेन व्यवस्थितास्तावत् काश्चिदेव पुरुषसन्ततयः सन्ति। तासामन्योन्यव्यतिरेकजाताः स्त्रीपुंसव्यक्तयो ब्राह्मणशब्दवाच्याः। अनिदम्प्रथमतया

चेत्, नैवम् ; प्रमातृत्वं हि जातित उपाधितो वा एकमिति निश्चितं स-म्प्रतिपन्नं च; अतस्तेनैवैकत्वेन प्रमितीनामेकत्वमिति न दोषः। सत्ता-सामान्याभ्युपगमे स्वरूपसत्ता हि स्वीकर्तव्या। वैशेषिकास्तु द्रव्यगुण-कर्मसु सत्तासामान्यमिच्छन्ति, सामान्यविशेषसमवायेषु स्वरूपसत्त्व-मेव; वार्तिककारीयाश्च द्रव्यगुणकर्मसामान्येषु सत्तासामान्यमिच्छन्ति, सत्तासामान्यस्य स्वरूपसत्त्वमेव; अतः सर्वत्र स्वरूपसत्त्वमेवास्तु, किमर्धजरतीयेन ? किंच सत्तासामान्यं कुत्र वर्तते ?—इति पर्यनुयोगे स्वरूपेषु वर्तते—इति वक्तव्यम् ; स्वरूपाणां किं सत्त्वम्, असत्त्वं वा ?—इति विकल्पिते—सत्त्वमेव—इति वक्तव्यम् ; अन्यथा शशवि-षाणादिष्वपि सत्तासमवायप्रसङ्गात्। अतः सत्तासामान्ययोगव्य-तिरेकेणापि स्वरूपसत्त्वमङ्गीकर्तव्यम्। एवं च सति स्वरूपसत्त्वमेव

---

च सन्ततेः सर्वेषां तत्सन्ततिपतितत्वात् सिद्धा ब्राह्मणशब्दवाच्यता, तेन सन्ततिविशेषप्रभवत्वमेव ब्राह्मणशब्दप्रवृत्तावुपाधिः, तत्प्रभ-वानामेव कर्मस्वधिकार इति न किञ्चिदवहीनम्। के पुनस्ते सन्तति-विशेषाः ? न ते परिगणय्य निर्देष्टुं शक्यन्ते, किन्तु लोकत एव प्रसिद्धाः प्रत्येतव्याः। तथाच तज्जन्यत्वेऽवगते ब्राह्मणशब्दं प्रयुञ्जते लोकाः।

कथंपुनस्तज्जन्यत्वमेव शक्यमवगन्तुम्, स्त्रीणामपराधसम्भवात् ? सम्भवन्ति हि पुंश्चल्योऽपि स्त्रियः परिणेतारं व्यभिचरन्त्यः, उच्यते ; उक्तमेतत् दृश्यादर्शनमेवाभाव इति। यत्र यावदुपलब्धिसामग्री तावत्यां सत्यामपि यासां व्यभिचारो न दृश्यते, तासां नास्त्येव व्यभिचार इति लोकप्रमाणकमेतत्। अपिच अप्रमत्तैः स्त्रियो रक्षणीयाः, तासु च नास्त्येव व्यभिचारसम्भावनावकाशः; यासु त्वस्ति, मा भूत् तदपत्येषु तत्सन्त-तिप्रभवत्वनिश्चयः। नचैतावता यत्रापि निश्चयः शक्यः, तत्राप्यनिश्चय इति युक्तमिति। यच्च बह्वीषु ज्वालास्वेकवर्तिवर्तिषु ज्वालात्वं सामान्यं प्रत्यभिज्ञागोचरः कैश्चिदिष्यते, तदपि गुरुरस्माकं न मृष्यति। स खल्वेवं निरीक्षांचक्रे, अन्यथासिद्धा बुद्धिः सामान्यकल्पनाबीजम्। इयं तु

कृताकृतप्रसङ्गित्वादास्थेयम् । अतोऽनुवृत्तिप्रत्ययाभावादेव सत्तासामान्यं नास्तीति स्थितम् ॥

इति नन्दीश्वरकृते प्रभाकरविजये सत्तासामान्य निराकरणप्रकरणम् ।



---

भेदाग्रहणेन शुक्तिकारजतप्रत्ययवदुपपद्यत इति नालं सामान्यमुपस्थापयितुम् । तेन भेदाग्रहणपुरस्सरमभेदज्ञानं भिन्नेषु जात्यभ्युपगमे शरणमिति निरवद्यम्"—इति ।

# (१५) अपौरुषेयत्वप्रकरणम् ।

सम्प्रति वेदवाक्यानामपौरुषेयत्वं साध्यते । प्रमाणं चार्थापत्तिरनुमानं वा । अतीन्द्रियार्थप्रतिपादकत्वमपौरुषेयत्वं विना नोपपद्यत इत्यर्थापत्तिः । अनुमानं तु वेदवाक्यान्यपौरुषेयाणि, अतीन्द्रियार्थप्रतिपादकत्वात्, यदित्थं न भवति तत्तथा न भवति; यथा भारतादि—इति । नच सुरभि गगनकुसुममिति वचनेऽनैकान्तिकत्वम्; अपसिद्धान्तप्रसङ्गात्, प्रतिवादिनापि तादृशस्य प्रतिपादकत्वानभ्युपगमात् प्रसङ्गापादनमपि न भवति, स्वपक्षसाधनत्वपरपक्षासाधनत्वपरपक्षदूषणत्वाभावात् । अत्र च न स्वपक्षसाधनत्वम्; नाप्यसिद्धत्वाद्युद्भावनम् । नच योगीश्वरेन्द्रियविषयतयाऽन्यतरासिद्धत्वम्; अस्मदादीन्द्रियाभिप्रायेणातीन्द्रियार्थत्वम्, तद्व्यतिरिक्तस्यैन्द्रियत्वासिद्धेः । रूपादिनियतविषयं हीन्द्रियम्; तयोरपि तथाविधेन्द्रियेण नासिद्धत्वम् । नच मन्वादिष्वनैकान्तिकत्वम्; तेषामतीन्द्रियार्थप्रतिपादकत्वाभावात्, श्रुतिमूलत्वेन तदनुवादकत्वात् । अतएव परमाण्वादिप्रतिपादकं वाक्यं न प्रतिपादकम्, अनुमानसिद्धार्थानुवादकत्वात् । न च भागासिद्धताऽनुवादिषु, वेदवाक्यस्यैव पक्षीकृतत्वात् । डुमादीनामार्थाभावेन न पदत्वं वाक्यत्वं च । न चानध्यवसितत्वम्, पक्ष एव वर्तमानत्वेऽपि केवलव्यतिरेकित्वात्, व्यतिरेकित्वे सपक्षाभावात् । नच गगनादिः सपक्षः, नित्यत्वापौरुषेयत्वयोर्भेदात्, उच्चारणपूर्वकोच्चारणं ह्यपौरुषेयत्वम्; नच भारताद्यद्यतनवाक्यस्यापौरुषेयत्वम्, साक्षाद्वा परंपरया वा तस्योच्चारणपूर्वकत्वाभावात् ।

नच वाक्यत्वादिति हेतुना कालात्ययापदिष्टत्वम्, तस्य सामान्यविषयत्वेन विलम्बितत्वादस्य च वेदैकविषयत्वात् । नच व्यतिरेकित्वेन विलम्बः, अन्वयव्यतिरेकिण्यपि व्यतिरेकस्य विद्यमानत्वात् ।

नापि पौरुषेयत्वमपि साधयितुं शक्यम्, विकल्पासहत्वात् । किमस्मादादिपुरुषकृतत्वम्, आहोस्विद्विलक्षणकृतत्वम् ? अस्मदादिकृतत्वेऽ-

पसिद्धान्तः, विलक्षणकृतत्वे दृष्टान्तः साध्यविकलः। नचोभयानुगमेन पुरुषमात्रकृतत्वं साध्यम्, उभयाभावात्। नाप्येतेनैवानुमानेन विलक्षणसिद्धेरनुगतत्वसिद्धिः, इतरेतराश्रयत्वात्; विलक्षणपुरुषसिद्धौ तदनुगतपुरुषकृतत्वं साध्यं तत्सिद्धौ विलक्षणपुरुषसिद्धिरिति। नचेश्वरानुमानेन विलक्षणसिद्धिः, तत्रापि विकल्पस्य समानत्वात्; अस्मदादिकर्तृकत्वे साध्येऽपसिद्धान्तः, विलक्षणकर्तृकत्वे साध्यविकलः, उभयानुगतकर्तृकत्वमात्रत्वे साध्येऽन्योन्याश्रयत्वमिति।

ननु सर्वत्रादृष्टस्वलक्षणमनुमानमुच्छिद्येत, तत्राप्येवं विकल्पस्य संभवात्। उच्छिद्यतां काममिति वार्तिककारीयाः। नच प्राभाकाराणां क्रियाशक्त्यादिष्वेवं विकल्पप्रसंगः, लोकवत्सकलकारणजातीयस्वभावानतिक्रमेण कारणत्वाभ्युपगमात्। अतीन्द्रियस्य कारणत्वं न दृष्टमिति चेन्न; अदृष्टादीनां कारणत्वाभ्युपगमात्। अत्र तु कुलालादयः शरीरद्वारेण कर्तारः, अदृष्टाधीनाश्च, अनित्येच्छाज्ञानादियुक्ताश्च; विलक्षणस्त्वशरीर्येव कर्ता, नाप्यदृष्टाधीनः, नित्येच्छाज्ञानादियुक्तश्च; अतोऽत्यन्तापरिदृष्टस्वरूपत्वान्न विलक्षणस्य क्रियाशक्त्यादिसाम्यम्।

किं च पौरुषेयत्वं नाम? यदि वर्णोत्पादकत्वम्, तर्हि साध्यविकलता; नित्यत्वाल्लोके वेदे च वर्णानाम्; अथवा वाक्यक्रमोऽनुवादकत्वम्; तर्हि सिद्धसाधनत्वम्, अध्येतॄणामप्युक्तत्वात्। उच्चारणमेव हि पदादीनामुत्पादनम्, नान्यत्।

अथ स्वतन्त्रपुरुषकृतत्वम्, तर्हि वेदभारतयोरन्यतरवाक्यस्य पौरुषेयत्वं न स्यात्। अथ स्वतन्त्रपुरुषपूर्वकत्वम्। किमिदं स्वातन्त्र्यं नाम? अथ यदि प्रमाणान्तरेणार्थं ज्ञात्वा तत्प्रतिपादकवाक्यरचनम्, तर्हि अनाप्तवाक्यस्यापौरुषेयत्वं स्यात्। अथ प्रतीतिमात्रपूर्वकत्वम्, तर्हि विप्रलिप्सोर्वचनस्य न स्यात्। अथोच्चारणान्तरनिरपेक्षत्वं पौरुषेयत्वम्, तर्हि पुनरपि भारताद्यद्यतनवाक्यस्य न स्यात्। अथ साक्षात्परंपरया वोच्चारणनिरपेक्षत्वम्, तर्हि वेदविषयोच्चारणस्य भवत्पक्षे उच्चारणान्तरपूर्वकत्वाभावात् प्रत्यक्षादिमूलत्वं वाच्यम्। एवं च सति वेदार्थविषये

प्रत्यक्षाद्यभावात् कारणाभावे कार्याभावानुमानबाधाद् बाधितविषयत्वम्। योगीश्वरज्ञानपूर्वकत्वस्य संभवान्न कारणाभाव इति चेन्न, तथाविधप्रमाणासिद्धेः। अथानेनैवानुमानेन तदपि सिद्ध्यतीति चेन्न, इतरेतराश्रयप्रसङ्गात्। किंच पौरुषेयत्वानुमानस्य प्रवृत्तिरेव न सिध्यति। सिध्यति चेत्सन्दिग्धेभ्यो ह्यर्थेभ्यः प्रवर्तेत; नच वेदकर्तरि सन्देहोऽस्ति, अनुपलब्धेरभावनिश्चयात्, शशमस्तके विषाणाभावनिश्चयवत्। अथायोग्यानुपलब्धित्वेन वेदकर्तर्यनुमानं प्रवर्तेत; तर्हि—शशादिमस्तकं विषाणवत्, चतुष्पादात्मकत्वात्, गोमस्तकवत्—इत्यप्यनुमानं स्यात्। अथ वेदकर्तुरनुमानसिद्धत्वेऽपि परमाणुवदुपलब्धियोग्यत्वं नास्ति, तर्हि शशमस्तकेऽप्यनुमानसिद्धं विषाणं परमाणुवदयोग्यं स्यात्। अथ विषाणजातीयस्य रूपवत्त्वमहत्त्वादिदर्शनाच्छशमस्तकेऽपि प्रत्यक्षत्वम्, तर्हि वाक्यकर्तुरप्यस्मदादेः प्रत्यक्षत्वयोग्यत्वाद् वेदकर्तर्यपि प्रत्यक्षत्वमिति तुल्यचर्चः।

एवं वाऽनुमानम्—अपौरुषेयो वेदः, पौरुषेयविवादास्पदत्वात्, यदित्थं न भवति न तत्तथा, यथा भारतादि। न च प्रकरणसमत्वम्; पौरुषेयत्वसाधनदशायां सपक्षासद्भावेनायमेव हेतुरनध्यवसित इति। न च वाक्यत्वादित्यादिना कालात्ययापदिष्टत्वम्, पूर्वोक्तदोषप्रसङ्गात्।

न च वादिविप्रतिपन्नत्वेन संशयहेतुत्वम्, अनुमानसामग्रीत्वेन हेतुत्वात्। न च विप्रतिपत्तिमात्रेऽतिप्रसङ्गः; पौरुषेयापौरुषेयविवादास्पदत्वेनेतिविशेषणात्। न साध्याव्यावृत्तिशंका; गगनादिषु विपक्षेष्वपौरुषेयत्वस्य व्यावृत्तत्वात्। नच नित्यत्वमात्रमपौरुषेयत्वमित्युक्तमेव। नचाप्रयोजकत्वशङ्का; केवलव्यतिरेकिलक्षणोपेतत्वे सोऽपि प्रयोजको भवतु। नचोभये प्रयोजकत्वे चान्यतरस्याप्रयोजकत्वम्। नचाप्रयोजकत्वस्य दूषणत्वमपि सम्मतम्।

एवं वानुमानम्—विवदाध्यासितं वेदाध्ययनम्, गुर्वध्ययनपूर्वकम्, वेदाध्ययनत्वात्, अधुनाध्ययनवदिति। भारतेऽप्येवं प्रसज्यत इति चेन्न;

तत्र पौरुषेयत्वस्य भवतामपि सिद्धत्वादपसिद्धान्तप्रसङ्गात् । प्रसङ्गापादनमपि न भवति, स्वपक्षसाधनत्वाभावात् परपक्षदूषणत्वाभावाच्च ।

ननु किमस्मदध्ययनस्य गुर्वध्ययनपूर्वकत्वं साध्यते, तद्व्यतिरिक्तस्य वा ? प्रथमपक्षे सिद्धसाधनत्वम्, द्वितीये चाश्रयासिद्धत्वम् ; अतो नात्र संप्रतिपन्नो धर्मी विद्यते, नैवम् ; सिद्धस्यैवाध्ययनविशेषस्यास्मत्कर्तृकत्वेन विलक्षणकर्तृकत्वेन च विप्रतिपन्नस्य धर्मित्वमित्यदोषः । याच पौरुषेयत्वानुपपत्तिरुक्ता, साच नैयायिकस्येश्वरसिद्धौ, बौद्धस्य सर्वज्ञत्वसिद्धौ, वेदान्तिनो ब्रह्मसिद्धौ च समैव ; अन्यत्र परिकल्पनायास्तुल्यत्वात् । तदुक्तम् :—

"सर्वज्ञकल्पनान्यै (द्यै) स्तु वेदे या पौरुषेयता ।
तुल्यवत्कल्पिता येन तेनेदं संप्रधार्यताम् ॥" इति ।

किं च अपौरुषेयत्वानङ्गीकारे ईश्वरसिद्धिर्न स्यात् । तथाहि—न तावत्प्रत्यक्षेण गृह्यते; अयोग्यत्वात्, नाप्यनुमानेन; तस्य कर्तृमात्रविषयत्वात्, नापि पक्षधर्मतयाविशेष सिद्धिः; लोकस्वभावानतिक्रमेण विशेषमात्रापेक्षत्वात्, पर्वतगताग्निविशेषवत् । अत्रापि दृष्टस्वभावानुगुणकर्तृविशेषस्य सिद्धिः पक्षधर्मतया, नतु दृष्टस्वभावविपरीतस्य । नाप्यागमेन कृतकेन, अन्योन्याश्रयप्रसङ्गात्—तद्वचनत्वे सिद्धे तदीयाम्नानम्, तदीयाम्नाने तस्य प्रामाण्यम्, तस्य प्रामाण्ये तत्सिद्धिरिति । नच परं नियोगमेकानभ्युपगमात् (?)

किंच ईश्वरस्य वेदकरणात् प्रागप्रमाणकत्वप्रसङ्गः ; अपौरुषेयत्वे सिद्धे स्वर्गादि सिद्धिवदुपपद्येतापि । तदुक्तम्—"एवं चेश्वरे परोक्तमनुमानं निरस्तम् ; नेश्वरो निरस्तः" इति । अतः सिद्धमपौरुषेयत्वं वेदस्य ॥

इति नन्दीश्वरस्य प्रभाकरविजये अपौरुषेयत्व-
प्रकरणम् समाप्तम् ।

## (१५) अथ स्वरूपभेदसमर्थनं नाम प्रकरणम् ।

संप्रति स्वरूपभेदः समर्थ्यते । यदिदं द्रव्यगुणादीनामसाधारणं रूपं तद्व्यतिरेकेण भेदो नाम धर्मो नास्ति; स्वरूपमात्रेणैव भेदव्यवहारयोरुपपत्तेः । ननु यदि स्वरूपमात्रमेव भेदः; तर्हि स्वरूपमात्र-दर्शनानन्तरमेव भेदव्यवहारः स्यात्; न च तथा दृश्यते, सत्यं स्वरूपसमकालं भेदव्यवहारो नास्ति, तथापि स्वरूपातिरिक्तो भेदो नास्त्येव. किंतु प्रतियोगिसापेक्षो भेदव्यवहारः; स्वरूपमात्रदर्शने तदभावान्न भेद-व्यवहारप्रसङ्गः । ननु तर्हि प्रतियोगिसव्यपेक्षो भेदः, स्वरूपं तु प्रति-योगिनिरपेक्षमेव; कथमनयोरेकत्वम्? नैवम्; भेदस्तु न प्रतियोगिसव्यपेक्षः, किन्तु भेदव्यवहार एव; अत एव निर्विकल्पके प्रतियोगिज्ञाना-भवादेव भेदव्यवहाराभावः । तर्हि को भेदव्यवहा विषयः? स्वरूप-मात्रमेवेत्युक्तम् । नवै तावता स्वरूपदर्शनमात्रेण भेदव्यवहारप्रसंगः. भेदस्तु स्वरूपतन्त्रमेव; नहि स्वरूपमात्रं भेदः । यथा देवदत्तः पित्रपेक्षया पुत्रः, न तु देवदत्तमात्रं पुत्रः; अथ देवदत्तव्यतिरिक्तोऽपि न भवति पुत्रः ।

ननु किमनया क्लिष्टकल्पनया? भेदस्तावदयमस्माद्भिन्नः—इति प्रत्यक्षेण प्रतीयत एव, सत्यं प्रतीतिरस्ति । न च स्वरूपादिवत् द्रव्यधर्मत्वमुपपद्यते, द्रव्यगुणादिष्वनन्तर्भावात्, गुणादिवृत्तित्वात् । न च पदार्थान्तरत्वकल्पनमुचितम् । भेदप्रतीतिव्यवहारयोः स्वरूप-मात्रालम्बनत्वेनोपपद्यमानत्वात् ।

ननु तर्हि स्वरूपाणामानन्त्याद्भेदशब्दवाच्यमेकं न भवेत्; नैवम्, प्रतियोगिसव्यपेक्षं स्वरूपमित्यौपाधिकत्वेनैकत्वोपपत्तेः ।

ननु प्रतियोगिसव्यपेक्षं स्वरूपं भेद इत्युक्तम्; केयं प्रतियोगि-सव्यपेक्षता नाम? यदि स्वरूपमात्रमेव; तर्हि पूर्वोक्तो दोषः, अथ धर्मान्तरं प्रतियोगिसव्यपेक्षत्वम्, तर्हि स एव भेद इति, अङ्गीकृतः स्वरू-पातिरिक्तो भेदः, नैवम्; धर्मभेदवादिनां मिथ्याभेदवादिनां च भेदव्यति-

रिक्तमेव प्रतियोगिव्यपेक्षत्वं नाम धर्मान्तरमङ्गीकर्तव्यम्, इतरथा घट-स्वरूपमात्रेण तद्गतभेददर्शनादेकस्मिन्नेव भेदव्यवहारप्रसङ्गात्; अथ संयोगादिवद्विशिष्टत्वाद्भेदस्य द्वयोर्दर्शन एव भेदप्रतीतिः, नैवम्; घटाद्भिन्नः पटः—इति भेदव्यवहारः, न संयोगवद्विशिष्टतया; तत्रायमस्मात्संयोगः—इति न कदाचिदपि प्रतीतिः; एवं संप्रतियोगिकत्वेन प्रतिपन्नस्य भेदस्य पश्चाद् व्यवहारमात्रमनयोर्भेद इति; तस्माद्भेद-व्यतिरेकेण प्रतियोगिसव्यपेक्षत्वं नाम सर्वभेदवादिभिरङ्गीकर्तव्यम्; तदपेक्षं स्वरूपं भेदव्यवहारकारणमस्तु, किमन्तर्गडुना भेदधर्मेण?

ननु धर्मवादिना प्रतियोगिसव्यपेक्षस्वभावत्वं धर्मस्याङ्गीकर्तुमुचितम्, सर्वत्र तदपेक्षादर्शनात्, स्वरूपं तु न, प्रतियोगिनिरपेक्षस्यापि स्वरूपस्य कदाचिद्दर्शनात्; अतो न प्रतिबन्दिसिद्धिरिति, नैवम्; अत्रापि प्रतियोगिसव्यपेक्षत्वं न स्वरूपस्य स्वभावः, किंतु भेद-व्यवहारस्य।

ननु विलक्षणव्यवहारो विलक्षणव्यवहार्यनिबन्धिनोऽपि दृष्टः, यथा घटव्यवहाराद्भेदिनो भिन्नो-भेदः—इति व्यवहारः; तत्र विलक्षणो व्यवहारोऽस्ति, नतु विलक्षणं व्यवहार्यम्; अतोऽनैकान्तिको हेतुः, अभिन्नो भेदिनो भेद इत्यङ्गीकारे नामान्तरेण स्वरूपभेदवाद एव स्वीकृतः स्यात्। अथ तत्रार्थैक्याद्विलक्षणव्यवहारस्तत्रमेव नास्ति, तर्हि-भिन्नो घटः—इत्यत्रास्मन्मतेऽर्थैक्याद्विलक्षणव्यवहारवैलक्षण्यमेव न भवेत्; अतः स्वरूपातिरेकेण भेदाङ्गीकारो न युक्तः।

ननु स्वरूपस्य प्रतियोग्यपेक्षा वक्तव्या; तत्र विकल्पनीयम्—किं स्वरूपाद्भिन्नः प्रतियोगी, किं वा अभिन्नः? इति; न तावदभिन्नः, स्वयमेव स्वस्य प्रतियोगित्वप्रसङ्गात्, न च भिन्नः; भेदे सति प्रतियोगित्वसिद्धिः, प्रतियोगित्वसिद्धौ च भेदसिद्धिरितीतरेतराश्रयत्वम्। अथ भेदान्तरेण भिन्नः प्रतियोगी, तर्ह्यनवस्थाप्रसङ्ग इति, नैवम्; धर्मभेदवादिनोऽपि प्रतियोगिसव्यपेक्षत्वमस्त्येव; तत्राप्येवं विकल्पो दोषश्च समानः; यस्तत्र परिहारः, स एवात्रापि।

ननु स्वरूप भेदवादः प्रतीतिविरुद्धः। तथाहि—पटाद्भिन्नो घटः—इति विशेषणत्वेन भेदः प्रतीयते; भवतस्तु स्वरूपव्यतिरेकेण भेदाभावाद्विशेषणभूतोऽर्थो नास्त्येव; अतः—भेदो घटः—इत्येव व्यवहारः स्यात्, न—भिन्नो घटः—इति, नैवम्;—भेदिनो भिन्नो भेदः—इत्यत्र भेदव्यतिरेकेण विशेषणभूतो भेदो नास्त्येव, तथापि—भिन्नो भेदः—इति।

अथ भेदस्य भेदान्तराभावेऽपि प्रतियोगिसव्यपेक्षं स्वरूपं विशेषणम्,भेदमात्रं विशेष्यमिति; तर्हि —भिन्नो घटः—इत्यत्रापि प्रतियोगिसव्यपेक्षस्वरूपस्यैव विशेषणत्वम् स्वरूपमात्रस्य विशेष्यत्वमिति तुल्यचर्चः पाचकादिशब्दवत्। यथा—पाचको देवदत्तः—इत्यत्र पाचकव्यक्तिष्वनुगतमेकं सामान्यं गुणो वा नास्त्येव, तथापि तटस्थभूतपचनक्रियोपलक्षितपाचकव्यक्तिषु पाचकशब्दो वर्तते; नहि पाचकशब्दस्य पचनक्रियार्थः। एवं प्रतियोग्युपलक्षितस्य विशेषणत्वाङ्गीकारादेव प्रतीतिविरोधोऽपि नास्त्येव।

यत्तूक्तम्—भेदपटशब्दयोः पर्यायत्वप्रसङ्ग इति, तदपि—भिन्नो भेदः—इत्यत्रापि समानम्, तथाप्युच्यते—प्रतियोगिसव्यपेक्षरूपस्य भेदशब्द प्रवृत्तिनिमित्तत्वान्न पर्यायतेति।

अथोच्येत—भेदस्य विदारणात्मकत्वात्स्वरूपस्यैव विदारणात्मकत्वात्तदंशांशस्यापि तथैव प्रसङ्गाच्छून्यं जगद्भविष्यदिति, नैवम्; भेदस्य विदारणात्मकत्वेऽपि यस्माद्यस्य भेदव्यवहारः,तस्मात् तस्यैव विदारणात्मकत्वम्; नहि सर्वस्मात्स्वस्य भेदव्यवहार इति न तत्र विदारणात्मकत्वम्; अत उपेक्षणीयोऽयं पक्षः।

यदप्येतदुक्तम्—भेदस्य भेदान्तराभ्युपगमेऽपि नानवस्थादोषः, मूलभेदव्यवहारस्य भेदान्तरापरिज्ञानेऽपि विरोधाभावदिति; तच्च नैवम्, भेदस्य ज्ञायमानतया व्यवहारहेतुत्वात्; यत्र सत्तया हेतुत्वं बीजाङ्कुरादौ, तत्र नानवस्थादोषः, अत्रत्वाश्रयप्रतियोगिभ्यां भिन्नत्वेन ज्ञातो भेदो भेदव्यवहार हेतुः; अन्यथा ताभ्यां भेदस्य च भेदान्तरापरि-

ज्ञाने वस्तुदर्शनमात्रेण सकलभेदव्यवहारप्रसङ्गः, भेदिनो भेदस्य भेदज्ञाने आश्रयधर्मयोर्भेदज्ञानस्यावश्यं भावित्वात् ; तस्याप्येवमित्यनवस्था दुर्निवारैव ।

यत्तु केश्चिदुक्तम्—भेदस्य भेदान्तरापेक्षा नास्त्येव, परगतभिन्नव्यवहारहेतुत्वात् ; यत् परगतकार्यकारि तत् तथाभूते कार्ये न परमपेक्षते, यथा रूपं रूपव्यवहारे परिमाणं वा मानव्यवहारे ; अतो भेदस्य भेदान्तरापेक्षा नास्त्येवेति, तर्हि सिद्धो नः पक्षः; भिन्न व्यवहाराः सर्वत्र भेदधर्मयोगिन इति त्वत्पक्षं परित्यज्य भेदस्वरूपमेव स्वस्मिन् भिन्नव्यवहारहेतुरित्युक्तं भवताऽपि ; तदेवास्माभिरपि साध्यम् ; सर्वत्र स्वरूपं स्वस्मिन् व्यवहारहेतुरित्यास्थेयम् ; लाघवात् ।

अथ रूपस्य व्यवच्छेदे रूपान्तरनिरपेक्षत्ववद्घटादयोऽपि स्वव्यवच्छेदं स्वयमेव कुर्वन्त्विति रूपापलापप्रसंग इति, नैवम् ; यदि रूपव्यतिरेकेण रूपिबुद्धिः स्यात्, तदा रूपापलापोऽपि भवेत् , नहि कदाचिद्रूपमन्तरेण रूपिबुद्धिरस्ति; अत्र तु भेद मन्तरेणापि स्वरूपस्य कदाचिद् ग्रहणमस्तीति भवतैवोक्तम्; अतो यो धर्मभेदवादिभिराश्रयोऽङ्गीकृतः, प्रतियोगी वा,तस्मिन्नेवाऽऽश्रये तस्माद्भेद व्यवहारः प्रवर्तत इति किं प्रमाणशून्येन भेदधर्मेण ?

यत्तूक्तम्—स्वरूपभेद वादिभिरुक्तेन दूषणेन धर्मभेदवादो दूषितः ; धर्मभेदवादिभिरुक्तेन दूषणेन स्वरूपभेदवादो दूषितः ; अतो भेदस्य प्रमाणासहिष्णुत्वाद् भ्रान्त एव । किंच विवादाध्यासितो भेदो मिथ्या, भेदत्वात् , द्विचन्द्रादिभेदवत् ; विवादाध्यासितो भेदो मिथ्या, दृश्यत्वात्, रज्जुसर्पवत् ; "नेह नानास्ति किंचन" इत्यागमाच्च प्रतीयमानस्य भेदस्य भ्रान्तत्वमवगम्यते ; प्रमाणाभावाच्च , नहि प्रत्यक्षं भेदग्राहि, सन्मात्रविषयत्वात्तस्य ; तन्मूलत्वादेव नानुमानादिकमपि भेदे प्रमाणम्—इति,

अत्रोच्यते—घटाद्भिन्नः पटः—इति प्रतीतिव्यवहारौ सर्ववादिभिरङ्गीकर्तव्यौ ; अतः प्रतीतिबलसिद्धो भेदः कथमपह्नोतुं शक्यते ? सत्यं

प्रतीतिरस्ति, तथापि कारणाभावाद् भ्रान्तत्वमिति चेत्; नैवम्; प्रतीतिरेव हि कार्यभूता यथायोग्यं कारणमुपस्थापयति; नहि कारणादर्शनमात्रेण प्रतीतेरपलापो युज्यते, शून्यवादप्रसंगात्। तदुक्तं प्रकरणपञ्चिकायाम्—"कार्यं हि प्रतीयमानं कारणकल्पनायां प्रमाणम्, न पुनः स्फुटावधारितकार्यकारणानिरूपणयाऽपन्यायमर्हति"—इति

किंच एवमनङ्गीकारे सति सकलानुमानोच्छेदप्रसङ्गः; पर्वते धूमदर्शनमात्रेऽग्न्यदर्शनमात्रेण धूमप्रतीतेर्भ्रान्तत्वं न लाघवाद्वियते; अतोऽनुमानोच्छेद एव। अथ धूमस्याग्निव्याप्त्यवगतेरग्न्यभावे सति क्लृप्तहानिरेव स्यात्, अतः क्लृप्तकल्पनमेव वरमिति पर्वतेऽग्निरस्तीति कल्प्येत; तर्हि कार्यमपि योग्येन कारणेन व्याप्तमिति भेदप्रतीतिकार्यदर्शनाद्योग्यमेव कारणमनुमास्यामहे।

ननु शुक्तिकारजतज्ञानेऽपि रजतज्ञानदर्शनात्तदनुगुणं कारणमपि कल्प्यत इति सर्वत्र भ्रान्तिर्न स्यात्, नैवम्; तत्रापि कार्यदर्शनाद्योग्यमेव कारणमनुमीयत एव, किंत्वबाधितकार्यदर्शनात्क्वचित्पुष्कलमेव कारणमनुमीयते, क्वचित्तु बाधितकार्यदर्शनात् तद्योग्यस्य कारणदोषादेः परिकल्पनमिति सर्वत्र योग्यकरणानुमानमस्त्येव; अतो भ्रान्ताभ्रान्तव्यवस्थाऽप्युपपद्यत एव। तदुक्तम्—"यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययो नान्यः"—इति। भेदव्यवहारस्य तु न साक्षाद् बाधकमस्ति—नायं भेदः—इति; यौक्तिकमपि बाधकं नास्त्येव, कार्यत एव कारणस्य कल्प्यमानत्वात्।

यत्तु पश्चादद्वैतज्ञानेन बाधो भविष्यतीत्युक्तम्, तदपि नास्ति; उपनिषदां कार्यशेषतया प्रामाण्यवर्णनात्,* तासामद्वैतज्ञानजनक-

* यद्यप्यत्रत्यग्रन्थस्वारस्येनाद्वैतमतविरोध्येव प्रभाकरसंप्रदाय इति गम्यते, कार्यविधिसम्बन्धयुक्तमेव वेदान्तानां प्रामाण्यमिति वर्णनेन हि स्पष्टमिदं सूच्यते यत् सिद्धब्रह्मस्वरूपमात्रबोधने न वेदान्तानां तात्पर्यमिति; तथापि भूमिकायां निरूपितरीत्या कर्मप्रसङ्गेऽद्वैतमतनिरसनं कर्मठानां बुद्धिभेदाजननार्थमित्येवोरीकर्तव्यम्, नतु वस्तु-

त्वासिद्धेः तथाविधबाधा न संभाव्यते; प्रमाणप्रमेयव्यवहारिणां तावद्भेदस्य बाधादर्शनेन तात्त्विकत्वमुपपद्यत एव ।

यत्तु प्रत्यक्षं सन्मात्रग्राहि, न भेदग्राहीति ; नैतदुपपद्यते ; यदि सन्मात्रमेव गृह्यते, तर्हि—सन् घटः—इति प्रतीतिर्न स्यात्; अथ सत्ताव्यतिरेकेण घटोऽपि नास्त्येव,—तर्हि—सन् इति तत्प्रत्ययः स्यात्, न—सन् घटः—इति ; सन् घट इति पर्यायत्वप्रसङ्गश्च ।

अथ घटादावनुवर्तमानं सत्त्वमेव, अतश्चानुवृत्तमेव प्रत्यक्षम् ; व्यावर्तमानत्वात् घटादिरप्रत्यक्ष एवेति ; केयं राजाज्ञा—अनुवर्तमानमेव प्रत्यक्षमिति ? यदिन्द्रियेण गृह्यते, अनुवर्तमानं व्यावर्त्तमानं वा तत्प्रत्यक्षमिति सर्वजनसिद्धम् ।

यत्तु भेदो मिथ्येत्यनुमानम्, तत्र वक्तव्यम्—यद्यन्यत्रामिथ्याभूतस्य द्वित्वस्य चन्द्रे मिथ्यात्वम्, तदा यत्रामिथ्याभूतो भेदः तेनानैकान्तिको भेदत्वादिति हेतुः ; यदिवा सर्वत्र मिथ्याभूतत्वमभिप्रेत्य चन्द्रे मिथ्यात्वम् ; तर्हि साध्यविकलो दृष्टान्तः, अन्यत्र घटादावमिथ्याभूतस्यैव चन्द्रमात्रे मिथ्यात्वाभ्युपगमात् ; अनुमानान्तरेऽपि तथैव दोषः । अतो भ्रान्तिभेदवादोऽपि न युक्त इत्यलमतिप्रसंगेन ॥

इति नन्दीश्वरस्य प्रभाकरविजये स्वरूपभेदसमर्थनं नाम प्रकरणं समाप्तम् ।

---

गत्या भेदमिथ्यात्वादिनिरसने तात्पर्यमिति । अतएव बृहतीगतम्—यत्तु ब्रह्मविदामेष निश्चयः, यत्तूपलभ्यते तदतथ्यमिति, यन्नोपलभ्यते, तत्तथ्यमिति, नमस्तेभ्यः, विदुषां नोत्तरं वाच्यमिति वाक्यमुपपद्यते । यथा चेदं नोपहासपरं तथा वाक्यान्तराणामपि पर्यालोचने नियतं सिद्धं भवति । वाक्यान्तरं चात्रानुसन्धेयं भूमिकायामुल्लिखितमेव । सर्वथातु नाद्वैतसंप्रदायविरोधी प्रभाकरसंप्रदायः । व्यक्तमिदमग्र एव भविष्यति—यत्र 'न बुद्धिभेदं जनये दि'ति न्यायमनुसृत्यैवाद्वैतमतनिरासः प्राभाकरैः क्रियते । अधिकं च भूमिकातोऽनुसन्धेयम् ।

## ( १७ ) ईश्वराऽनुमानिकतानिरासप्रकरणम् ।

इदानीमीश्वरस्यानुमानिकत्वं निराक्रियते । केचिदेवमनुमानं वदन्ति—विवादाध्यासितम्, सकर्तृकम्, कार्यत्वात्, यत्कार्यं तत् सकर्तृकं यथा घटः, तथेदम्, तस्मात्तथा । अत्र सन्दिग्धकर्तृकं भूधरांकुरादिकं पक्षः, प्रसिद्धकर्तृको घटादिः सपक्षः, असिद्धकर्तृकमाकाशादि विपक्षः । न च कार्यत्वमसिद्धमिति वाच्यम्; सावयवत्वेन कार्यत्वस्य सिद्धत्वात् ।

ननु विरुद्धो हेतुः, यत्कार्यं तच्छरीरिकर्तृकं दृष्टम्, यथा घटादिकं विग्रहवत्कुलालादिकर्तृकम्; एवं च कार्यत्वं शरीरिकर्तृकत्वमेव साधयति, भवतां चाशरीरिकर्तृकत्वं सिषाधयिषितम्; अशरीरिकर्तृकत्वविपरीतं शरीरिकर्तृकं घटादिकं विपक्षः; तत्र कार्यत्वस्य पक्षविपक्षयोरेव वर्तमानत्वाद्विरुद्धत्वम्, नैवम्; यद्यशरीरिकर्तृकत्वमेव साध्यम्, तदा विरुद्धत्वम् । अस्माकं तु सशरीरकर्तृकत्वाशरीरिकर्तृकत्वविशेषं परित्यज्य सकर्तृकत्वमात्रमेव साध्यम्; इतरथाऽग्निमत्त्वे साध्ये किं प्रत्यक्षाग्निमत्त्वमुताप्रत्यक्षाग्निमत्त्वमिति, विकल्पे, प्रत्यक्षाग्निमत्त्वे बाधितविषयत्वम्, अप्रत्यक्षाग्निमत्त्वे साध्यविकलतैवेति सकलानुमानोच्छेदप्रसङ्गः; अतः प्रत्यक्षाप्रत्यक्षविशेषपरिहारेणाग्निसत्तामात्रमेव साध्यमिति वक्तव्यम्, तथाऽत्रापि ।

अथास्माकमपि धर्माधर्मद्वारेण क्षेत्रज्ञस्यैव कर्तृत्वात्सकर्तृकत्वमस्त्येवेति सिद्धसाधनता; नैवम्; क्षेत्रज्ञस्य धर्माधर्माद्यधिष्ठेयज्ञानासंभवात् कर्तृत्वमेव न संभवतीति तद्विलक्षणो धर्मादिसाक्षात्करणनिपुणः (कर्ताधिकरण सिद्धान्त न्यायापर पर्यायतया) पक्षधर्मतया विचित्रजगन्निर्माणचतुरः कर्ता सिद्धो भवति ।

ननु विलक्षणस्यापि कर्तृत्वं नोपपद्यते, तस्यापि धर्माधर्मसाक्षात्करणाशक्तेः; तदशक्तिश्च चेतनत्वात् क्षेत्रज्ञवत् । नच तस्य प्रत्यक्षस्य धर्माधर्मविषयत्वम्, प्रत्यक्षत्वात् संप्रतिपन्नप्रत्यक्षवत् । नच तस्य

ग्राह्येन्द्रियाणि धर्माधर्मगोचराणि, इन्द्रियत्वात्, अस्मदादीन्द्रियवत् । आन्तरमपि मनः करणं बहिरर्थे स्वतन्त्रं न भवति, अन्तःकरणत्वात्, अस्मदाद्यन्तःकरणवत्, नच तस्येच्छाज्ञानयोरपि नित्यत्वम्; इच्छाज्ञानत्वात्; अस्मदादीच्छाज्ञानवत्, नच तस्य विग्रहस्यापि नित्यत्वम्; भौतिकत्वात्, अस्मदादिविग्रहवत्, न तस्याभौतिको दिव्यो विग्रहः संभवति; विग्रहत्वात्, अस्मदादिविग्रहवत्, प्रयोजनरहितत्वात् नच तस्य कर्तृत्वम्; जगत्सृष्ट्यादिकमपि न तस्य संभवति; चेतनत्वात्, क्षेत्रज्ञवत्; इत्यादिभिर्हेतुशतैर्विलक्षणाङ्गीकारो निष्प्रमाणकः, अङ्गीकारेऽपि न तस्य जगन्निर्माणसामर्थ्यम्—इति ।

ननु तदेतदश्रुतन्यायशास्त्राणां छान्दसानां वेदापौरुषेयत्वश्रद्धाविजृंभितम् । तथाहि-तदेतत्सर्वमनुमानजातं विलक्षणमेव परमङ्गीकृत्य उच्येत, अनङ्गीकृत्य वा ? अङ्गीकृत्य चेत्, धर्मिग्राहकप्रमाणविरोधः सर्वेषाम्, अनङ्गीकृत्य चेत्, आश्रयासिद्धिः । अथ प्रसंगापादनमुखेनोक्तानां हेतूनामवकाशः, नैवम्; प्रसङ्गापादनमप्यनुमानमेव, किंत्वनुमानस्यैवोक्तिप्रकारभेदमात्रम्; अतस्तदङ्गीकारे तद्ग्राहकप्रमाणविरोधः, अनङ्गीकारे चाश्रयासिद्धिरिति तदवस्थमेव पूर्वोक्तं दूषणम् । किंच अन्त्यावयविप्रभृत्याऽऽद्व्यणुकमचेतनं कार्यं चेतनाधिष्ठितमेवोत्पद्यत इति निर्विवादम् । द्व्यणुकोत्पत्तिस्तु परमाणुक्रियातः; सा चादृष्टवदात्मसंयोगात् भवति;अदृष्टं च चेतनाधिष्ठितमेव सत् कार्यकरम् ।

तथाहि—विमतिपतितमेवं चेतनाधिष्ठितं सत्कार्यकरम्, अचेतनत्वात्, यद्यदचेतनं तत्तच्चेतनाधिष्ठितं कार्यकरं दृष्टम्, यथा वास्यादि, तथाचेदम्, तस्मात्तथा । अधिष्ठेयस्वरूपशक्तिकार्यज्ञानवानधिष्ठाता भवतीति क्षेत्रज्ञादन्यो नित्येच्छाज्ञानादिमानधिष्ठाता पक्षधर्मताबलात्सिद्धो भवति पर्वतगताज्ञाताग्निविशेषवत्; अतो न ज्ञानोत्पत्त्यर्थं शरीरेन्द्रियाद्यपेक्षा । न च ज्ञानस्य क्षेत्रज्ञज्ञानवदनित्यत्वप्रसङ्गः; पार्थिवाणुरूपादिकमनित्यं दृष्टमित्याऽऽप्यपरमाणुषु न रूपाद्य-

नित्यत्वप्रसंगः। न च क्षेत्रज्ञगतादृष्टेन विलक्षणस्य संबन्धाभावः, विलक्षणसंयुक्तपरमाणु संयुक्तक्षेत्रज्ञसमवेतत्वाददृष्टस्य संयुक्तसंयोगिसमवायः संबन्धः संभवत्येव। अतः क्षेत्रज्ञविलक्षणोऽधिष्ठाता सिद्धः।

एवं वाऽनुमानम्—विवादाध्यासितमुपादानोपकरणसंप्रदानप्रयोजनाभिज्ञबुद्धिमत्कर्तृकम्, कार्यत्वात्, घटादिवदिति ; अतः सिद्धोऽनुमानेनैव क्षेत्रज्ञविलक्षणो भगवानीश्वरः इति—चेत्

अत्रोच्यते—नानुमानिकत्वमीश्वरस्य संभवति, अनुमानस्य कर्तृमात्रगोचरत्वात् ; तेन न विलक्षणसिद्धिः।

यदुक्तम्—क्षित्यादिकं सकर्तृकं कार्यत्वात्,घटादिवदिति, तत्सिद्धसाधनम्, क्षेत्रज्ञस्यापि धर्माधर्मद्वारेण कर्तृत्वाभ्युपगमात्। तदुक्तम्—

"कर्मभिः सर्वसिद्धानां तत्सिद्धेः सिद्धसाधनम्।" इति।

अथ बुद्धिमत्कर्तृमात्रत्वं साध्यमिति चेन्न ; बुद्धिमत्त्वमपि क्षेत्रज्ञस्य विद्यत इति पुनरपि सिद्धसाधनमेव। अथ न बुद्धिमत्कर्तृकतामात्रं साध्यम्, किंतु उपादानोपकरणादिस्वरूपशक्तिकार्यबुद्धिमत्कर्तृत्वम्, तर्हि साध्यविकलो दृष्टान्तः ; सर्वोत्पत्तिमतामदृष्टस्याप्युपकरणत्वात् घटस्यापि तदुपकरणम् ; परमाण्वादिकमुपादानम्, न च कुलालस्य तद्विषयं ज्ञानमस्तीति साध्यविकलत्वमेव। किंच किमत्र साध्यत्वेनेप्सितम्, किमस्मदादिकर्तृकत्वम्, उत विलक्षणकर्तृकत्वम्, यद्यस्मदादिकर्तृकत्वम्, तर्हि सिद्धसाधनमपसिद्धान्तश्च; अथ विलक्षणकर्तृकत्वम्, तर्हि साध्यविकलो दृष्टान्तः।

अथोभयानुगतकर्तृत्वमात्रं साध्यमिति चेन्न, उभयाभावात्। अथ कर्तृत्वसामान्येऽपि पक्षधर्मतया विलक्षणसिद्धिः, नैवम् ; इतरेतराश्रयप्रसंगात् उभयानुगतसामान्यवदसिद्धिरिति।

ननु सर्वत्रादृष्टस्वलक्षणानुमानोच्छेदप्रसंगः। तथाहि—कादाचित्कं कारणवदिति कर्मसाधने द्रव्यगुणादिव्यतिरिक्तमेव कर्म सिषाधयिषितम् ; तत्रापि—किं द्रव्यादि कारणम् विलक्षणं वा इति

विकल्पे द्व्यणुकादौ सिद्धसाधनम्, विलक्षणे साध्यविकलता, उभयानुगतकारणमात्रे साध्येऽन्योन्याश्रयत्वमिति समानत्वात्, नैवम्; तत्र विलक्षणधर्माक्षेपः पक्षधर्मतया युक्तः, कारणजातीयस्वभावानतिक्रमेण विलक्षणधर्मिमात्राक्षेपात्; अत्रतु कर्तृजातीयस्वभावातिलंघनेन विशेषाक्षेपो भवताम्।

तथाहि—संप्रतिपन्नः कर्ता कुलालादिः सशरीरः पुण्यपापाधीनोऽनित्येच्छाज्ञानादियुक्तः, भवदभिलषितस्त्वशरीरः पुण्यपापादिरहितो नित्येच्छाज्ञानादियुक्तश्चेति न विलक्षणस्य क्रियाशक्त्यादिसाम्यम्, पक्षधर्मतया सर्वज्ञत्वसर्वशक्तित्वसर्वेश्वरत्वादिकर्तृजातीयविलक्षणगुणानामाक्षेप इति घटते। किंच कार्यत्वादित्ययमसिद्धो हेतुः, क्षित्यादीनामुत्पत्त्यसिद्धेः। तदुक्तम्—

"इदानीमिव सर्वत्र दृष्टान्ताधिक्यमिष्यते।"—इति।

अथ सावयवत्वात्कार्यत्वं साध्यत इति, तन्न; नहि सावयवत्वं प्रयोजकं कार्यत्वस्य, सावयवत्वाभावेऽपि बुद्ध्यादौ कार्यत्वदर्शनात्; अतः प्रागभाववत्त्वमेव प्रयोजकं कार्यत्वस्य। अथ तदेव हेतुर्भवतु, तर्हि असिद्धो हेतुः, क्षित्यादीनां प्रागभाववत्त्वासिद्धेः।

ननु सावयवत्वं प्रागभाववत्वं चोभयं प्रयोजकं भवतु; अतः सावयवत्वेन कार्यत्वं प्रसाध्यते, सपक्षैकदेशवृत्तेरपि साधकत्वाभ्युपगमात्, नैवम्; शक्यक्रिये हि सावयवत्वेन कार्यत्वं दृष्टं घटादौ अशक्यक्रिये हि सावयवत्वेन विशेषहेतुना कार्यत्वे प्रतिषिद्धे सावयवत्वसामान्य हेतुना कार्यत्वं न शक्यते साधयितुम्, बाधितविषयत्वात् यथा मूर्तत्वमनित्यत्वेन घटादौ व्याप्तमप्यशक्यनाशेषु परमाणुष्वनित्यत्वं न साधयितुं शक्नोति।

किंच विरुद्धश्चायं हेतुः। तथाहि—यत्र कार्यत्वं सकर्तृकत्वे विशेषहेतुना व्याप्तं दृष्टं घटादौ, तत्र सर्वत्र विग्रहवत्कर्तृकत्वे व्याप्तं दृष्टं कुलालादौ; अतः सकर्तृकत्वं साधयत् कार्यत्वं विग्रह

त्वविशिष्टमेव साधयति। ननु अशरीरणोऽपि कर्तृत्वं दृष्टं स्वशरीर-प्रेरणायाम्. नैवम्; तत्रापि सशरीरस्यैव प्रेरणायां कर्तृत्वम्. प्रेर्यमपि स्वशरीरमेव; प्रयत्ननिमित्तं हि प्रेरणम्; तच्चाशरीरिणो न संभति, मुक्तान्यात्मन्यसंभवात्। अथ पूर्वशरीरपरित्यागेनैव शरीरान्तरग्रहादशरीरस्य शरीरपरिग्रहे कर्तृत्वं दृष्टम्; नहि युगपच्छरीरद्वय-परिग्रहः संभवति, नैवम्; तत्रापि सूक्ष्मशरीरस्य संभवात्, पूर्वशरीर-परित्यागे सर्वत्र शरीरिण एव कर्तृत्वम्।

नचैतावता सकलानुमानोच्छेदप्रसंगः, सपक्षदृष्टस्याव्यभिचारिण एव धर्मस्य परिग्रहात्; यथा धूमस्याग्निव्याप्तावुष्णत्वदाहकत्व-प्रकाशकत्वाद्यव्यभिचारि धर्मविशिष्टस्याग्नेर्गम्यत्वमङ्गीक्रियते। अपर्वतस्थत्वमपि व्याप्तमिति चेन्न, पर्वतेऽपि क्वचित्प्रत्यक्षदर्शनात्। अनुमित्सितदेशव्यतिरिक्तदेशस्थत्वमप्यव्यभिचारादुपाधिरिति चेन्न, व्याप्ति-ग्रहणदशायामकस्माद्देवानुमित्सितदेशस्य स्मरणाभावात्; अतः सकर्तृकत्वं साध्यमानं सशरीरकर्तृकत्वमेव; सशरीरकर्तृकत्वेऽपसिद्धान्तः। अशरीरकर्तृकत्वे सशरीरकर्तृकं सर्वं विपक्षः; अतः पक्षविपक्षयोरेव कार्यत्वस्य हेतोर्वर्तमानत्वात् विरुद्धार्थसाधकत्वाद्वा विरुद्धो हेतुः।

किंच अशरीरकर्तृकत्वं साध्यधर्मत्वेनेप्सितम्; तत्र कार्यत्वं सशरीरकर्तृकत्वव्याप्तमिति तदेव साधयतीति धर्मविशेषविपरीत-साधनो हेतुः। तथा धर्मिविशेषविपरीतसाधनश्च। अशक्यक्रियस्य हि भूभूधरादेर्धर्मित्वम्, कार्यत्वं च शक्यक्रियेण घटादिना व्याप्तमिति तदपि साधयति। तथा कार्यत्वं क्षेत्रज्ञकर्तृकत्वेन व्याप्तमिति तदपि साधयति। तथा कार्यत्वमदृष्टवत्कर्तृत्वेन व्याप्तमिति तदपि साधयति। तथा अनित्येच्छाज्ञानादिमत्कर्तृकत्वेन व्याप्तमिति तदपि साधयति। अथ अशेषविशेषपरिहारेण सकर्तृकत्वसामान्यं साध्यम्, तर्हि सामान्यमात्रकर्तृकत्वाभावात्साध्यविकलतैव। पक्षधर्मतया विशेषाऽऽक्षेपो

कर्तृजातीयस्वभावानुगुणमेव क्षेत्रज्ञत्वादिविशेषमेवाक्षिपति, न विपरीतस्वभावम्, यथाग्निमत्त्वे साध्ये पक्षधर्मतयोष्णत्वदाहकत्वादिधर्मयुक्तस्याग्निविशेषस्यैवाक्षेपः, न विपरीतस्यानुष्णत्वादियुक्तस्य ।

किंच अनैकान्तिकश्चायं हेतुः, चेतनकर्तृकत्वं हि साध्यत्वेनाभिमतम्; तत्र भूभूधरादिकं पक्षः, चेतनकर्तृको घटादिः सपक्षः, चेतनकर्तृकव्यतिरिक्तः सर्वो विपक्षः, तत्र कार्यत्वं पक्षत्रयेऽपि वर्तते भूभूधरादौ शाखाभङ्गादौव । (?) अतोऽनैकान्तिकत्वमपरिहार्यम् ।

किंच अनध्यवसितश्चायं हेतुः । तथाहि किमिदं कार्यत्वमभिप्रेतं भूभूधरादेः, किं भूभूधराद्यवयविन एवाभूत्वा भवनलक्षणकार्यत्वम्, अहोस्विदविनाशिन्येवावयविनि क्रमेण कतिपयावयवोत्पत्तिलक्षणं वा ? अभूत्वा भवनलक्षणस्य कार्यत्वस्यास्माभिरनभ्युपगमादसिद्धो हेतुः, क्रमेण कतिपयावयवोत्पत्तिलक्षणे कार्यत्वेऽनध्यवसितत्वम्; एवंविधस्य कार्यत्वस्य भूभूधरादिष्वेवसंभवादन्यत्राभावाच्च, पक्ष एव वर्तमानत्वात्, सपक्षसद्भावेन केवलव्यतिरेकित्वाभावाच्च ।

किंच कालात्ययापदिष्टो हेतुः । तथाहि अनुपलब्ध्या तावत् क्षित्यादीनामकर्तृकत्वमेव निश्चीयते; अतोऽनुपलब्धिबाधितमिदमनुमानम्, यथा शशमस्तकं विषाणवत्, चतुष्पान्मस्तकत्वात् , गोमस्तकवदित्यनुमानमनुपलब्ध्या बाध्यते । अथच जगत्कर्तुरनुमानसिद्धत्वादशरीरत्वाच्चास्मदाद्युपलंभयोग्यता नास्तीति योग्यानुपलम्भाभावान्नानुमानबाधः; एवं तर्हि शशविषाणस्याप्यनुमानसिद्धत्वात्परमाणुवदयोग्यानुपलंभ इति न तत्राप्यनुमानबाधः । (यदि)विषाणजातीयस्य रूपवत्त्वमहत्त्वादिदर्शनात्तत्र प्रत्यक्षयोग्यता; अत्रापि तर्हि कर्तृजातीयस्य विग्रहवत्त्वेन प्रत्यक्षयोग्यत्वेनास्मदाद्युपलम्भयोग्यत्वादुपलभ्येत, नचोपलभ्यते; अतोऽनुपलब्धिविरोधो दुर्विरहः ।

किंच अनुमानविरुद्धमिदमनुमानम् । तथाहि क्षित्यादिकमकर्तृकम्, शरीरजन्यत्वात्, आकाशवत्; अकार्यत्वप्रयुक्तेयं व्याप्तिरिति-चेन्न, उभयोरपि प्रयोजकत्वे विरोधाभावात् । तथा विवादाध्यासितं

क्षेत्रज्ञकर्तृकम्, चेतनकर्तृकत्वात्, घटादिवत् । तथा क्षित्यादिकमशरीरकर्तृकं न भवति, कार्यत्वात्, घटादिवत् । तथा क्षित्यादिकं नित्यप्रयत्नेच्छाज्ञानवत्कर्तृकं न भवति, कार्यत्वात्,घटादिवत् ।एवं प्रमेयत्वादाकाशादिवदिति वा । तदुक्तम्—

"प्रत्यक्षाद्यविसंवादि प्रमेयत्वादि यस्य च ।
सद्भाववारणे शक्तं को नु तं कल्पयिष्यति ॥" इति ।

एतेषामनुमानानां दृष्टस्वलक्षणत्वाददृष्टस्वलक्षणात् भवदीयानुमानात् बलीयस्त्वम् । किंच प्रकरणसमश्चायं हेतुः । तथाहि स्वपक्षसिद्धावप्येक एव हेतुः त्रीरूपः(विरुद्धः)प्रकरणसमः । विवादाध्यासितं सकर्तृकमिति वदतोऽशरीरकर्तृकत्वमेव विवक्षितम्; तत्र कार्यत्वादित्ययमेव हेतुः सशरीरकर्तृकत्वमपि साधयति । तथाहि—विवादाध्यासितं शरीरिकर्तृकम्, कार्यत्वात्, घटादिवदिति अतोऽसिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमाख्यानि न्यायशास्त्रसिद्धानि सर्वाणि दूषणानि भवदीयानुमानस्योत्पादितानि ।

यत्तूक्तम् —अदृष्टादिकं चेतनाधिष्ठितम्, अचेतनत्वात्, वास्यादिवदिति; तदयुक्तम्; अधिष्ठेयस्वरूपशक्तिकार्यज्ञ एवाधिष्ठाता; नह्यदृष्टादिविषयज्ञानं संभवति; शक्यज्ञानं चाचेतनं वास्यादि चेतनाधिष्ठितं दृष्टमिति हि व्याप्तिः;अशक्यज्ञानं चादृष्टम्; अतो विशेषव्याप्तिबाधितत्वान्नाचेतनत्वसामान्यव्याप्तिरुन्मिषति । नापि पक्षधर्मतयाऽदृष्टज्ञानादिसंभवः, तन्मूलभूतस्याधिष्ठातृत्वस्य वारितत्वात् । पूर्वोक्तान्यपि दूषणानि यथासंभवमत्राप्युद्भाव्यानि ।

यत्पुनरेतदभिहितम्—किंविलक्षणमङ्गीकृत्य ज्ञानानित्यत्वादि साध्यतेऽनङ्गीकृत्य वा ? अङ्गीकृत्य ग्राहकप्रमाणबाधः, अनङ्गीकृत्य चेदाश्रयासिद्ध इति, तदतिस्थवीयः पूर्वोक्त दूषणजातैस्तद्ग्राहकप्रमाणस्य दूषितत्वान्न केन (चित्) ज्ञानादितीत्येतान्यमानबाधः । अतो नानुमानेन विलक्षणसिद्धिः ।

एवंचानुमानिकत्वमेवेश्वरस्य निराकृतम्, नेश्वरोऽपि निराकृतः । अत एव न प्रभाकरगुरुभिरीश्वरनिरासः कृतः; तत्समर्थनं च वेदान्त-

मीमांसायां क्रियत इत्यभिप्रेतम् । अत एवाहुरात्मवादान्ते मृदितकषायाणामेवैतत्कथनीयं न कर्मसङ्गिनामिति सर्वमुपपन्नम् ।

इति नन्दीश्वरस्य प्रभाकरविजये आनुमानिकेश्वर-
निराकरणप्रकरणम् ॥

# १८ आत्मनः शरीरादिभेदसमर्थनम् ।

* सम्प्रति शरीरेन्द्रियमनःप्राणबुद्धिभ्यो भिन्नत्वं नानात्वं ग्राहकतया सिद्धत्वं चात्मनः प्रतिपाद्यते । तत्र तावत् बार्हस्पत्याः शरीरमेवात्मानमाचक्षते । तथाहि—प्रत्यक्षत एव देहात्मत्वमवगम्यते । ज्ञाता त्वात्मा भवतीति निर्विवादं सर्ववादिनाम् । तत्र शरीरस्यैव ज्ञातृत्वं प्रतीयते अहं जानामीति । अहङ्कारगोचरश्चाभेदः; स्थूलोऽहम् कृशोऽहं गच्छाम्यहं तिष्ठाम्यहमिति स्थौल्यादियुक्तेन देहेनाहङ्कारस्य सामानाधिकरण्यस्य प्रतीतेः ।

अथायं प्रयोगो लाक्षणिकः, अतो न शरीरालम्बनत्वमिति चेन्न । मुख्यपूर्वको हि सर्वत्र लाक्षणिकप्रयोगः । न चात्र देहातिरेकेणान्यो मुख्यार्थ उपलभ्यते ।

ननु करचरणाद्यनेकावयवरूपाद्यन्वितं शरीरम्, तदालम्बनत्वे अहमिति ज्ञात्रवभासस्य तदीयानेकावयवरूपादिप्रतिभासान्वयोऽपि स्यात्, शरीरप्रतिभासवत्; न च तथा दृश्यते । अतः शरीरादिनिमित्तार्थेऽहम्प्रत्ययः । सत्यमवयवरूपादिप्रतिभासानन्वयः; बाह्येन्द्रियप्रत्यक्षघटादौ [ त ] न्नियमदर्शन [ ना त् ] । अयं च मानसः प्रत्ययः । मनइन्द्रियस्य त्वान्तरगुणग्रहण एव सामर्थ्यनियमात्तथा नावभासः ।

---

*अव्यवहितपूर्वप्रकरणे-आत्मवादान्ते मृदितकषायाणामेवैतत् कथनीयं न कर्मसङ्गिनामिति उपसंहारेण वेदान्तमीमांसायां तदुपयोगितया निरूपणीयमात्मस्वरूपमन्यत्, कर्मप्रसङ्गे निरूपणीयमात्मस्वरूपमन्यदिति यत् सूचितम्, तदनुसारेण कर्मप्रसङ्गोपयुक्तमात्मस्वरूपं निरूपयितुमुपक्रमते—संप्रतीति । शरीरात्मत्वविज्ञानं पारलौकिकफलककर्मानुष्ठानविरोधीति सर्वसंप्रतिपन्नम् । अतः प्रथमतः शरीरात्मवादनिरासः क्रियते । एतेनेन्द्रियात्मवादोऽपि व्याख्यातः; तस्य गोलकान्येवेन्द्रियाणीति मते शरीरस्येवेन्द्रियाणामपि भस्मत्वसाङ्गत्वाच्च परलोकगमनमिति स वादः कर्मानुष्ठानविरोधीति निगदव्याख्यातमिदम् । शक्तिरेवेन्द्रियम्, इति मते निराश्रयस्य तस्य लोकान्तरगमनमसंभव्येव । एतेन प्राणात्मवादोऽपि व्याख्यातः । आत्मैकत्ववादस्तु व्यावहारिकः जातिवर्णाश्रमभेदेन विधीनां प्रवृत्तिविरोधीति नानात्मवादोऽपि कर्मप्रसङ्गोपयुक्तः । अस्मिन्नुप सङ्गेऽद्वैतवादनिरासोऽपि क्रियमाणो नाद्वैतनिरसार्थोऽपि तु कर्मणां प्रवृत्तिविशेषसंपादनार्थं इति रहस्यं न कैरपि विस्मर्तव्यमिति शम् ॥

किञ्च बाह्येन्द्रियप्रत्यक्षेऽप्येवं नियमो नास्ति, अनेकावयवयोगिनस्त्र्यणुकस्य ग्रहणेऽवयवग्रहणाभावात्, तथा त्वगिन्द्रियेण वा वायुप्रतीतौ स्पर्शाधिष्ठानमात्रतयैव प्रतीतिः, नत्ववयवप्रतिभासान्वयः। भवतामपि देहव्यतिरिक्तालम्बनत्वेऽप्यहंप्रत्ययस्य तदीयगुणसुखादिगुणप्रतिभासान्वयः समान एव। किञ्च शरीर एव चैतन्योपलम्भादन्यत्रानुपलम्भाच्च शरीरगुण एव चैतन्यम्।

ननु शरीरगुणत्वे चैतन्यस्यासाधारणत्वाद्विशेषगुणत्वं प्राप्तं भवतीति चेत्, तर्हि कारणगुणपूर्वकत्वमपि स्यात्। तदपि भवत्विति चेन्न, प्रत्येकं शरीरारम्भकेष्ववयवेषु चैतन्यप्रसङ्गादेकस्मिन् शरीरेऽनेकसहस्रचैतन्यप्रसङ्गः। नचैतद्दृष्टमिष्टं वा। अतो न शरीरगुणत्वं चैतन्यस्य, नैवम्; शरीरगुण एव चैतन्यम्, तत्रैवोपलम्भात्। यद्यपि कारणगुणपूर्वकविशेषगुणत्वं न संभवति; तथापि शरीरगुणत्वं न निराकर्तुं शक्यते। न चायावच्छरीरभावित्वादित्यादिभिरनुमानैः शरीरगुणत्वप्रतिषेधः, प्रत्यक्षबाधितविषयत्वात्तेषाम्। विशेषगुणत्वप्रतिषेधेच देहगुणत्वाभ्युपगमप्रसङ्गश्च। यद्यप्यारम्भकावयवेषु चैतन्यं नास्ति; तथापि क्रमुकफलताम्बूलीदलावयवादिष्वविद्यमानोऽपि कार्ये परिदृश्यमानो राग इवारम्भकावयवसंयोगविशेषाच्छरीरे तदुपलम्भो नानुपपन्नः।

किञ्च विशेषगुणस्यापि क्वचदकारणपूर्वकत्वं दृष्टम्, यथा शुक्लकृष्णादिनानातन्तुभिरारब्धे पटे चित्रत्वमारम्भकेषु प्रत्येकमविद्यमानमपि दृश्यते। यद्यवयविनि चित्रत्वं रूपं नाङ्गीक्रियते, तदा नीरूपत्वादवयविनोऽप्रत्यक्षत्वप्रसङ्गः। विशेषगुणस्यापि करकाठिन्यस्याकारणगुणपूर्वकत्वदर्शनादनैकान्तिकत्वं च। अपिचेच्छानुविधायिक्रियत्वमिन्द्रियाश्रयत्वं च देहे दृश्यमानमचेतनात् घटादेर्व्यावर्तमानं देहस्यैव चेतनत्वमवगमयति।

अथेतरभूतसङ्घातेष्वचैतन्याच्छरीरेऽपि नोपपद्यत इति मतम्, भवतामपि पृथिव्यादिद्रव्येषु चैतन्यानुपलम्भात् द्रव्यत्वादेव व्यतिरिक्तात्मन्यपि न संभवेदिति समानोऽयमनुयोगः। मम शरीरमित्यादिव्यति-

रेकदर्शनमपि ममात्मेति व्यतिरेकवदौपचारिकत्वेन समाधेयम्।

अथोच्येत दृश्यस्य देहस्य द्रष्टृत्वं न घटते, एकस्य कर्मकर्तृभाव-विरोधादिति, नैवम्; व्यतिरिक्तात्मवादे वा कथमहंप्रत्ययदृश्यस्य द्रष्टृत्वम्? रूपभेदादिति चेत्, तदस्माकमपि समानम्।

किञ्च परसमवायिक्रियाफलयोगित्वं हि कर्मत्वम्। तच्च शरीरे व्यतिरिक्तात्मनि च न संभवति; स्वसमवायिज्ञानफलयोगित्वात्। अत उभयवादिसंमतस्य देहस्यैव चेतनत्वोपपत्तौ न तत्त्वान्तरकल्पनायां प्रमाणमस्ति। तथाच सूत्रम्—"पृथिव्यापस्तेजोवायुरिति तत्त्वानि, तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवत्—इति।

अत्र प्रतिविधीयते—न तावद्देहस्यात्मत्वं संभवति, प्रत्यक्षेणैव व्यतिरेकस्य प्रतीयमानत्वात्। तथाहि—इदमाकारगोच्च शरीरं पराक्तया प्रतीयते, अहमिति च प्रत्यक्तयाऽऽत्मा। अत इदङ्कारगोचराद्देहात् घटादि-वत् व्यतिरिक्तगोचरोऽहम्प्रत्ययः। इतरथा परस्पराविभागापत्तिः। नन्वे-कस्यैव रूपभेदोपपत्तिः, न; चैत्रः कुण्डलिन्यात्मनि रूपभेदेन प्रतिपद्यमा-नोऽयं कुण्डलीति प्रतिपद्यते, न कुण्डलमहमिति। अतो मिश्रितेदम्प्रत्य-यादहम्प्रत्ययाद्भेदसिद्धिः।

किञ्चोपरतबाह्येन्द्रियस्याप्यहंप्रत्ययो जायते। तत्र शरीरावयव्या-लम्बनत्वेऽवयवप्रतिभासोऽवश्यंभावी स्यात्। नचावयवग्रहणमन्तरे-णावयविग्रहणं संभवति। बाह्येन्द्रियप्रत्यक्ष एव तन्नियम इति चेत्, तर्ह्यवयव्यपि बाह्येन्द्रियप्रत्यक्ष एव, न मानसप्रत्यक्षोऽवयवी दृष्टः। अथ बाह्येन्द्रियप्रत्यक्षेऽपि त्र्यणुके व्यभिचार इति चेत्, यत्रावयवग्रहणाधीनो-ऽवयविग्रहः, तत्रेयं व्याप्तिः। अतः शरीरावयविग्रहणेऽवयवग्रहो दुर्निवार एव। वायोः स्पर्शाधिष्ठानतया ग्रहणे रूपप्रतीतिमात्रमेव नास्ति, अवय-वग्रहणं तु विद्यत एव; स्पृश्यमानघटवत्

यत्तु शरीर एवाहंप्रत्ययो दृश्यते-स्थूलोऽहं कृशोऽहमिति स्थौल्यादि-सामानाधिकरण्यादिति, तच्च नैवम्; नियमितबहिरिन्द्रियवृत्तेरहमिति-प्रतिभासे स्थौल्यादिप्रतीतिरेव न दृश्यते। अतश्चाक्षुषदेहप्रत्ययवदहम्प्र-त्ययस्य न स्थौल्यादिसंबन्धनियमः। एवं सति यत्र स्थूलोऽहमिति

प्रतीनिरस्तात्राहंशब्दः शरीरे लक्षणया वर्तत इत्यङ्गीकर्तव्यम्; मुख्यस्याहमर्थस्य शरीरव्यतिरेकेण प्रतिपन्नत्वात् ।

ननु मम शरीरमिति व्यतिरेकप्रतीतेः साक्षाद्भेदप्रतीतेः शिलापुत्रकस्य शरीरमिव नौपचारिकत्वमाश्रयितुमुचितम् । ममात्मेत्यत्र तु व्यतिरेकस्योभयवादिसिद्धत्वादविवादाच्च युक्तमौपचारिकत्वम्; अतः शरीरव्यतिरिक्तत्वमात्मनः प्रत्यक्षम् ।

अनुमानाच्च व्यतिरेकः । तथाहि—विवादास्पदोऽहम्प्रत्ययो न शरीरालम्बनः, तदवयवप्रतिभासरहितत्वात्, यथा घटोऽयमिति प्रतिभासः; तथा शरीरमहम्प्रत्ययगोचरो न भवति, इदमिति गृह्यमाणत्वात्, बाह्येन्द्रियग्राह्यत्वाद्वा, घटादिवदिति; तथा शरीरम्, परार्थम्, सङ्घातत्वात्, शयनासनादिवत्; तथा शरीरम्, प्रयत्नवताऽधिष्ठितम्, हिताहितप्राप्तिपरिहारयोग्यचेष्टायोगित्वात्, यथा रथादि; तथा शरीरं धर्मि प्रयत्नवताऽधिष्ठितमिति साध्यो धर्मः, इच्छायत्तविकृतकर्मवायुयुक्तत्वात्, यदेवं यथा भस्त्रा; तथा शरीरं प्रयत्नवताऽधिष्ठितं निमेषोन्मेषयुक्तावयवयोगित्वाद्दारुयन्त्रवत्; तथा शरीरस्य वृद्धिक्षतभग्नसंरोहणं व्यतिरिक्तचेतननिमित्तं वृद्धिक्षतभग्नसंरोहणत्वात्, गृहपतिनिमित्तगृहवृद्धिक्षतभग्नसंरोहणवत्; तथा देहो नात्मा भवितुमर्हति, उत्पत्तिमत्त्वात्, परार्थत्वात्सन्निवेशविशिष्टत्वाद्रूपादिमत्त्वात्,भूतत्वात,घटादिवत्; तथा देहो नात्मा,सच्छिद्रत्वात्, अदेहित्वाद्देहत्वात्, मृतदेहवत्; तथा देहः, स्वव्यतिरिक्तद्रष्टृकः, दृश्यत्वात्, घटादिवदित्यादिसाधनशतैर्बाधितविषयत्वादिन्द्रियाश्रयत्वादित्यादिव्यतिरेकहेतवो न साध्यं साधयितुमीशते ।

अथानुमानं न प्रमाणम्; एकस्यैव प्रत्यक्षस्य प्रामाण्याभ्युपगमात्, तन्न; किमत्र प्रमाणमनुमानमप्रमाणमिति ? प्रत्यक्षमनुमानं वा ? न तावत्प्रत्यक्षमनुमानाप्रामाण्यं गोचरयत् किमप्युदीयते । अनुमानं चेत्अङ्गीकृतमनुमानस्य प्रामाण्यम् । नाप्रत्यक्षं नप्रमाणं प्रत्यक्षान्यत्वात्, तदाभासवदित्येतदेव भवद्भिरुच्यते । वादानधिकारश्चानुमानानभ्युपगमे ।

किञ्च भवद्भिरनुमानप्रामाण्यमङ्गीकृत्यान्तर्भाव एव कथ्यते; इतरथा

लोकविरोधात् । किञ्च ज्ञानसुखादेर्विशेषगुणत्वात्तेषां च कार्यद्रव्ये कारण गुणपूर्वकत्वात् न शरीरविशेषगुणत्वम् । यत्तु मदशक्तिवच्चैतन्यस्यापि शरीरविशेषगुणत्वमुक्तम्, तदनुपपन्नम्; शर्करविशेषगुणत्वान्न तत्सामर्थ्यं ज्ञानसुखादीनाम् । शरीरगुणत्वे तस्यासाधारणत्वाद्विशेषगुणत्वं ज्ञानादेः।

किञ्च ज्ञानादिकम्,विशेषगुणः,कार्यत्वे सत्येकेन्द्रियप्रत्यक्षत्वात्, रूपादिवत्; अतो विशेषगुणत्वादकारणगुणपूर्वकत्वाच्च नशरीरगुणत्वम्, ताम्बूलरागस्तु चर्वणजनितपूर्वद्रव्यावयवविभागानन्तरसंयोगेन कारण-भूतपरमाणुप्रभृति जन्यत इत्यदोषः; अवयवेष्ववयविरागस्योपलभ्यमा-नत्वात् । न चात्र शरीरावयवेषु चैतन्यमुपलभ्यत इति वैषम्यम् ।

यत्तु चित्रत्वमकारणपूर्वकं दृष्टमिति, तन्न, नानारूपतैव चित्रता । नानारूपं तु तन्तुभिरारभ्यत इति न किञ्चिदप्यनुपपन्नं पश्यामः । अस्तु-वा चित्रत्वं नाम रूपविशेषः,सतु कारणगतैर्नानाविधरूपैरेवारभ्यत इति युक्तम् । न चैवमत्र; शरीरावयवेषु चैतन्यं नोपलभ्यत इत्यसकृ-दुक्तत्वात् । न च करकाठिन्यस्य विशेषगुणत्वम्, संयोगविशेषत्वात्; काठिन्यस्य द्विष्ठत्वमप्यन्योन्यसंश्लिष्टापेक्षयाऽस्त्येव ।

अपि च स्थिर एव शरीरे गुणान्तरोत्पादाभावेऽपि स्रग्विलेपनगन्ध-वद्भिर्निवर्त्यन्ते ज्ञानोदयादयः, न च शरीरगुणत्वेन सम्प्रतिपन्ना रूपादयस्तथा निवर्त्यन्ते । तदुक्तम् —

तस्मिन्रूढेऽप्यसद्भावात्स्रग्विलेपनगन्धवत् । इति

किञ्च ये शरीरगुणरूपादयस्ते स्वस्य च प्रत्यक्षा बाह्येन्द्रियग्राह्याश्च, ज्ञानसुखादयस्तु न तथेति न शरीरगुणः । अतः शरीरव्यतिरिक्त आत्मा सिद्धः ।

नन्वस्तु शरीरव्यतिरेकः; शरीरस्येदंतया भानादहम्प्रत्ययवेद्यत्वानु-पपत्तेः, इन्द्रियाण्येवात्मा भवतु, न च तेषामिदन्तया प्रतीतिरस्ति । नापि तेषामहम्प्रत्ययवेद्यत्वेऽवयवरूपादिप्रतीतिप्रसङ्गः, तेषां सूक्ष्मत्वादवयव-प्रतिभासानुपपत्तेः । किञ्चेन्द्रियव्यापारफलं हि ज्ञानम् । अतस्तान्येव ज्ञातॄणीति युक्तम्; तद्व्यापारफलस्य तद्गामित्वस्य स्वतः प्राप्तत्वात्, यथा स्नानाध्ययनादिफलं तत्कर्तृगामि; अत इन्द्रियाण्येवात्मेति

पौराणिकाः। अत एव वचनं सत्यतपसः "द्रष्टुश्चक्षुषो नास्ति जिह्वे"ति।

एतदपि न साधु। तथाहि—इन्द्रियान्तरदृष्टस्येन्द्रियान्तरेण प्रतिसन्धानं दृश्यते—यमहमद्राक्षं तमहं स्पृशामीति, तदिन्द्रियात्मवादे नोपपद्यते। न हि देवदत्तानुभूते यज्ञदत्तस्य प्रत्यभिज्ञानं संभवति।

अथ संहत्येन्द्रियाणामात्मत्वमिति मतम्, तदप्यनुपपन्नम्; न हीन्द्रियाणि संहत्यार्थज्ञातॄणि। ज्ञाता ह्यात्मा भवतीत्यविवादम्।

किञ्चैकस्मिन्निन्द्रियेऽपि गते आत्मनः प्रायणमपि प्रसज्येत। न चैतदिष्टं दृष्टं च। अपि चैकेन्द्रियवैकल्येऽपि तदनुभूतार्थविषयिणी स्मृतिर्दृश्यते, सापीन्द्रियात्मवादे न च घटते।

यत्पुनरिदमुक्तं यद्व्यापारफलं तत्तत्कर्तृगामि युक्तमिति, तदप्यनैकान्तिकम्; यतः परशूत्पतननिपतनव्यापारजन्यं द्वैधीभावाख्यं फलं न च परशुगामि दृष्टम्।

यत्तु सात्यतपसं वचनम् तच्छरणागतपरित्राणस्यावश्यकर्त्तव्यतामन्यथा च व्याधस्य प्राणयात्रापत्तिं चालोच्योक्तमिति न दोषः।

तर्हि मन एवात्मा भवतु! तथा सतीन्द्रियान्तरदृष्टस्येन्द्रियान्तरेण प्रतिसन्धानं न न घटते; एकत्वात्सर्वेन्द्रियाध्यक्षत्वाच्च। मनसो नित्यत्वादेवेन्द्रियाभावेऽपि तद्विषयस्मरणमप्युपपद्यते।

एतदपि न चतुरस्रम्; मनसः करणत्वात्। यत्करणं तन्न चेतनम्, यथा चक्षुरादि; बाह्याभ्यन्तरज्ञानकरणत्वेन च वादिभिर्मनसोऽवक्लृप्तिः। अतः करणरूपस्यैव ज्ञानकर्तृत्वं कथमिव संभवति? स्वातन्त्र्यलक्षणं हि कर्तृत्वम् करणत्वं तु पराधीनाधिष्ठानाधीनपारतन्त्र्यवत्त्वम्। अतः कथमिदमन्योन्यविरुद्धं रूपद्वयमेकस्मिन् संभवेत्? अथ तस्य कारणान्तरं कर्तृ, तर्हि नामान्तरेणात्मैवाङ्गीकृतः। अतो न मनसश्चेतनत्वम्।

एवं तर्हि प्राण आत्माऽस्तु, तथाच सति जीवच्छरीरे सात्मकत्वप्रतीतिः लोकान्तरगमनं देहादुत्क्रमणं देहान्तरसञ्चरणं च सुतरामुपपद्यते; गत्वरस्वाभाव्यात्प्राणस्य। अन्यथात्मनः परममहत्त्वे चाभ्युपगम्यमाने स्पर्शशून्यत्वादेव परिस्पन्दानुगमनादयो न मुख्याः स्युः।

एतदप्यसारम्। वाय्वात्मकत्वात्प्राणस्य ज्ञानसुखाद्यनुपपत्तेः।

अपिच सुषुप्तावात्मा वृत्तिहीन इति निर्विवादम्। प्राणस्य तु तदानीमपि श्वासप्रश्वासलक्षणा वृत्तिरुपपद्यते ।

अतः स्पर्शेन्द्रियग्राह्यघटादिवत्स्फुटमनात्मत्वं प्राणस्य । अतः प्राणव्यतिरिक्त एवात्मा ।

अस्तु तर्हि बुद्धिरेवात्मा, अजडत्वात्, जडत्वव्याप्तं शरीरादिषु दृष्टमनात्मत्वम् । जडत्वं च संविदि निवर्तमानमनात्मत्वमपि निवर्तयति ; अजडत्वं च बुद्धेः प्रभाकरैरभ्युपगतमेव ।

किञ्च यैस्तु संविद्व्यतिरिक्त एवात्माभ्युपेतः, तैः संवेदनमत्यङ्गीक्रियत एव । तदधीनत्वात् तत्सिद्धेः । अत उभयवादिसिद्धसंविदैव सकलव्यवहारोपपत्तौ किं तत्त्वान्तराभ्युपगमेन ?

नन्वहं जानामीति ज्ञाता व्यतिरिक्त आत्मा प्रत्यक्षतः प्रकाशते , नैवम्; तस्य विकल्परूपत्वात् । तदुक्तम्—

"अविभागो हि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते" ॥इति ॥

एतदप्यनुपपन्नम् । क्षणभङ्गिन्याः संविद आत्मत्वे प्रतिविषयमन्यथाभावेन परेद्युर्ज्ञातस्य परेद्युः प्रत्यभिज्ञानानुपपत्तिः । भवति ह्यन्येद्युर्दृष्टे परेद्युरिदमहमदर्शमिति प्रत्ययः । नचास्य निरालम्बनत्वमुचितम्; प्रमाणविरोधात् । निरालम्बनत्वसाधनानां निरालम्बनत्वे निरालम्बनत्वमेव न-सिध्येत्; सालम्बनत्वेनानैकान्तिकत्वम् ।

अथ विज्ञानलक्षणसन्तानस्थायितया प्रत्यभिज्ञोपपत्तिः, नैवम् ; तस्य स्थायित्वे क्षणिकत्वप्रतिज्ञाविरोधादपसिद्धान्तप्रसङ्गाच्च । अथ विज्ञानक्षणानां भेदेऽपि सौसादृश्यात्प्रत्यभिज्ञोपपत्तिः, लूनपुनर्जातनखकेशादिजातिविवेकवदिति चेन्न, तत्र तद्व्यतिरिक्तः पूर्वापरव्यक्तिदर्शी सादृश्यानुसन्धाता चैकः समस्ति; अत्रतु विज्ञानव्यक्तीनां क्षणिकत्वेन परस्परानुसन्धानं च न संभवतीति न सादृश्यनिबन्धनं प्रत्यभिज्ञानम् ।

किञ्च सादृश्यमपि क्षणिकं स्थायि वा ? क्षणिकत्वे ज्ञानतुल्यत्वान्न तन्निबन्धनं प्रत्यभिज्ञानम् । स्थायित्वे च क्षणिकत्वहानिरपसिद्धान्तश्च । अतः प्रत्यभिज्ञानसमर्थः संविदाश्रयः स्थायी चेतनोऽभ्युपगन्तव्यः ।

सच विभुः सर्वत्र कार्योपलम्भात्। तथाहि नानादेशेषु सर्वत्र बुद्धि-सुखादीनामुपलम्भात्तत्र सर्वत्रात्मनः सन्निधिरभ्युपगन्तव्यः ; गुणिनमन्तरेण गुणस्यावस्थानासंभवात्। तत्र गत्वा सन्निधौ कल्प्यमाने गतिकल्पनं तत्कारणकल्पनं चेति गौरवं प्रसज्यते ; अगच्छतोऽपि सन्निधानदर्शनात्। आकाशादौ इदमेव विभुत्वं यदगच्छतोऽपि युगपन्नानादेशेषु सन्निधानम्। किञ्चात्मा, सर्वमूर्तिमद्भिः संयुज्यते, अणुपरिमाणरहितत्वे सति नित्यद्रव्यत्वात्, यदित्थं तदित्थम्, यथाऽऽकाशादि।

अथाणुपरिमाणो भवत्वात्मा, को दोषः? अयमेव दोषः, अणुपरिमाणत्वे युगपदेव शिरःपादवेदना नोपपद्यते। किञ्चात्माणुपरिमाणाधारो नभवति, इन्द्रियग्राह्यगुणाधिकरणत्वात्, घटादिवदिति।

ननु भवतु तर्हि शरीरपरिमाणः? तथाहि—आत्मा, यत्रोपलभ्यते तत्परिमाणः, तत्रैव सर्वत्रोपलभ्यमानगुणत्वात्, यदित्थं तत्तथा, यथाऽन्तर्वर्तितयोपलभ्यमानप्रभानुगुणः प्रदीपो गृहपरिमाण इति दिगम्बराः, तत् नोपपन्नम् ; आत्मनः सर्वमूर्त्तिमद्भिः सह संयोगस्य साधितत्वात् तत्रैवोपलभ्यमानगुणत्वं विरुद्धम्। दृष्टान्तश्च साध्यविकलः। नहि गृहोदरवर्तिनी प्रदीपप्रभा गृहसमानपरिमाणा; तदन्तर्वर्तित्वेन न्यूनपरिमाणत्वात्। नहि समानपरिमाणं गृहान्तरं गृहान्तर्वर्त्ति दृष्टम्। तथा साधनविकलश्च। नहि गृहान्तर्वर्तिनी प्रभा गृहे सर्वत्रोपलभ्यते।

किञ्च शरीरपरिमाणत्वे सावयवत्वप्रसङ्गः। यन्निरवयवद्रव्यं तदणु वा विभु वा दृष्टम्। अत उभयपरिमाणरहितस्य सावयवत्वमेव। किञ्च मशकहस्तिदेहयोरात्मनो विषमपरिमाणत्वप्रसङ्गश्च। तदपि सवयवस्यैव युज्यते, न निरवयवस्य। तथाच श्रुतिः—"अनन्तमपारं" "सर्वव्यापी सर्वभूतान्तरात्मा"-इति च। भगवद्गीताच—"नित्यः सर्वगतः स्थाणुरि"ति। एवं चाणुत्वाङ्गुष्ठपरिमितत्ववादाश्च सूक्ष्मत्वाभिप्राया वेदितव्याः। अतो विभुरेवात्मा।

तथा नित्यश्च आत्मा। उपनिषदश्च कार्यपरा अपि नित्यत्वमसकृदनुवदन्ति। तस्मादनित्यत्वानुमानान्यपि आगमविरुद्धत्वान्न साध्यसाधनानि। अतः सिद्धं नित्यत्वम्।

तथा प्रतिशरीरं नानाभूतश्च । तथाहि—आत्मभेदप्रतीतिः सर्ववादिसम्मता । एकात्मवादिनोऽपि भेदप्रतीतिमङ्गीकृत्य काल्पनिकत्वमाहुः । अतोऽयं भेदः पारमार्थिकः काल्पनिको वेति वादिनां विप्रतिपत्तिः ।

तत्र पारमार्थिकत्वमेव भेदस्य युक्तम्; प्रमाणसिद्धत्वात् । तथाहि—प्रत्यक्षानुमानार्थापत्त्यागमैरात्मभेदोऽवसीयते । प्रत्यक्षेण तावदहमिति भोक्तृतया स्वात्मा परात्मनो भिन्नः प्रतीयते । परात्मा चानुमानेनायमिति गृह्यते, नाहमिति । अतो विलक्षणाकारबुद्धिबोध्यतया घटपटयोरिव स्वात्मपरात्मनोः भेदः स्फुटतरः ।

अथ य एवाहमिति प्रतीयते, स एव परशरीरस्थोऽयमिति प्रतीयत इति, नैवम् ; यदि परशरीरेऽपि स एवात्मा, तर्हि करणभेदेऽपि प्रत्यभिज्ञायेत तथा । यथा कर्तुरेकत्वे करणभेदेऽपि चक्षुषा दृष्टस्यार्थस्य त्वगिन्द्रियेण प्रत्यभिज्ञाय अहमद्राक्षमहं स्पृशामीति, तथा परशरीरस्थ आत्मा परानुभूतमपि प्रत्यभिजानीयात् ; एकत्वादात्मनोऽनुभवितुः । नच-मनोभेदादप्रत्यभिज्ञेति-वाच्यम्; मनसोऽपि करणत्वात् ।

तथानुमानेनाप्यात्मभेदोऽवगम्यते । विवादाध्यसितोऽयमात्मा, द्रव्यत्वातिरिक्तपरजात्याधारभेदेन नाना ; अश्रावणविशेषगुणाधिकरणत्वात्, यदित्थं तत्तथा, यथा घटादिः तथाऽऽत्मा,नाना भवितुमर्हति, ज्ञानासमवायिकारणाश्रयत्वात्, मनोवत् ; तथात्मा, नाना विशेषगुणाधारत्वाद्घटादिवत् ।

नन्वेकत्वमप्यनुमानेन साधयितुं शक्यते । विवादाध्यासितानि शरीराणि, एकेनाऽऽत्मनाऽऽत्मवन्ति, शरीरत्वात्, प्रतिवादिशरीरवत् ; तन्न ; सर्वात्मानः सर्वगता इत्यस्मन्मतम् । तत एकस्याप्यात्मनः सर्वशरीरेषु विद्यमानत्वात् सिद्धसाधनम् । अथैकेनैवात्मनात्मवत्त्वं साध्येत, तर्हि प्रतिवादिशरीरे सर्वेषामात्मनां सद्भावात्साध्यविकलता दृष्टान्तस्य ।

अथैकस्यात्मनो भोगसाधनानीति साध्यते, तर्ह्येकमेव शरीरं यथा-स्वस्य भोगसाधनं तथा स्वस्य च भार्यादीनां शरीराण्यपि भोगसाध—नान्येवेति पुनरपि साध्यविकलता । अथ न भोगसाधनत्वमात्रं साध्यम्, किन्तु भोगायतनत्वम्, अतश्च न साध्यविकलतेति, तन्न ;

किमिदं भोगायतनत्वं नाम ? यदि भोगसाधनत्वम् ; तर्हि पूर्वोक्तमेव दूषणम्। अथ भोगः सुखम्, तदायतनत्वं नाम सुखसमवायित्वमभिप्रेतम्, तदा शरीरेषु सुखसमवायाभावात् बाधितविषयत्वमपसिद्धान्तश्च। सप्रतिसाधनश्च हेतुः।

तथाहि—विवादाध्यासितान्यैककालवर्तिशरीराणि, स्वसङ्ख्ययात्मवन्ति,शरीरत्वात्, प्रतिवादिशरीरवत्। नच जन्मान्तरशरीरेष्वनैकान्त्यम्; एककालवर्तिनां पक्षीकृतत्वात्। नच सौभर्यादिशरीरेषु व्यभिचारः; तेषां युगपदेव बहुशरीरपरिग्रहे प्रमाणाभावात्, पुराणवादानां चान्यत्वात्। यदि तेषामनेकशरीराणि सन्तीत्यभिनिवेशः,तदाऽस्मदाद्यैककालवर्तीनि शरीराणीति पक्ष विशेष एव कर्तव्यः। तथार्थापत्त्यापि भेदोऽवसीयते। तथाहि—सुखदुःखव्यवस्था तावत् प्रतीयते, एकः सुखमनुभवति यदा, तदैवापरो दुःखी दृष्टः ; इयं सुखदुःखादिव्यवस्थाऽऽत्मभेदं विनाऽनुपपद्यमाना भेदं कल्पयति।

नन्वियं व्यवस्था एकात्मकत्वेऽप्युपपद्यते,यथैकशरीरे पादे मे वेदना शिरसि मे सुखमिति व्यवस्था, तथा शरीरान्तरेऽपि व्यवस्थोपपत्तेरन्यथोपपत्तेरिति, मैवम्, यत्रैकात्मत्वं सम्प्रतिपन्नम्, तत्र सम्बन्ध्यनुसन्धनमप्यस्ति, यत्र सम्बन्ध्यनुसन्धानं नास्ति तत्रैकात्मकत्वमपि नास्त्येव। शरीरभेदप्रयुक्तमननुसन्धानं नात्मभेदप्रयुक्तमिति चेन्न;आत्मन एकत्वेपि शरीरभेदे जातिस्मरस्यानुसन्धानदर्शनात्। तथा बालस्य स्तन्याभिलाषादेर्जन्मान्तरानुभूतहर्षहेतुत्वस्मरणनिबन्धनत्वाच्च। एतच्च सर्ववादिभिरभ्युपगतमेव। अन्यथाऽकस्मादेव स्तन्याभिलाषानुपपत्तेः। जन्मान्तरशरीरानुभूते सर्वेषां सर्वविषयमनुसन्धानं किमिति नास्तीति चेन्न; वर्तमानशरीरानुभूतेऽपि अनुभूतस्य सर्वस्यानुसन्धाननियमाभावात्। अतोऽत्यन्ताननुसन्धानमात्मभेदे सत्येवोपपद्यते न शरीरमात्रभेदे।

एतेन—मनोभेदादननुसन्धानमित्यपि—प्रत्युक्तम्। अतोऽर्थापत्त्याप्यात्मनानात्वसिद्धिः।

तथागमादपि—"द्वे ब्रह्मणी वेदितव्ये परं चापरंच" "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति

अनश्नन्नन्यो अभिचाकशीति"। "पृथगात्मानं प्रेरितारं च मत्वा" "सर्वे एतेऽ प्यात्मनोऽभ्युच्चरन्ति" "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा" "एको बहूनां विदधाति कामान्" "निरञ्जनः परमं साम्यमुपैति" "मम साधर्म्य-मागताः" "उत्तमः पुरुषस्त्वन्य" इत्यादि श्रुतिः स्मृतिरपि, तथा "ब्राह्मणो बृहस्पतिसवेन यजेत" "राजा राजसूयेन" "वैश्यो वैश्यस्तोमेने" त्यादिकर्मविधयोऽधिकारिभेदार्थमात्मभेदमाक्षिपन्ति।

ननु भवतां कृत्स्नस्यागमस्य कार्यपरत्वेन प्रामाण्यान्न सद्भार्थभूता-त्मभेदप्रामाण्यमुपपद्यते, नैवम्; एकात्मवादिनां भवतां सिद्धेऽपि प्रामाण्यादात्मभेदे प्रमाणमेवागमः। अस्माकं तु कार्यपरत्वेऽपि भेदानु-वादकत्वादेवागमसिद्धो भेदः। एवं नानात्वग्राहकप्रमाणविरोधादेकत्व-श्रुतयोऽप्यन्यथा व्यावर्णनीयाः। नच प्रत्यक्षादिविरोध आगमस्यैव बलीयस्त्वम्; तथा सत्युपनिषद्वाक्यानां कचिद्गौण्या व्यावर्णनं स्वशास्त्रे क्रियमाणमसङ्गतं स्यात्। अतो नाम्नायस्य बलीयस्त्वम्। अतः प्रत्यक्षाद्यविरोधेन द्वैतवादा निर्वर्णनीयाः।

तत्रैकमेवाद्वितीयमित्याद्येकत्वश्रुतय एकस्मिञ्छरीरे एक एव स्वामीत्येवंपराः। "नेह नानास्ति किञ्चने" त्यादिनानात्वनिषेधश्रु-तयोऽनेकशरीरग्रहणेऽप्येक एवात्मा न नाना इति, एवं"एष नेति नेती"त्या-दयस्तु देहेन्द्रियादिभ्यो भेदपराः। तस्मादागमादप्यात्मनानात्वं सि-ध्यति। एवंच सति नानात्मवाद एव बद्धमुक्तव्यवस्थोपपत्तिः। एकत्वेतु काल्पनिकी बद्धमुक्तव्यवस्थेति चेत्, तर्हि बन्धमोक्षयोर्मिथ्यात्वात्साधु समर्थितोऽद्वैतवादिभिर्मोक्षः।

तथा विषयग्रहणे ग्राहकत्वेनैवात्मनः सिद्धिः; न ग्राह्यत्वेन, एकस्य-कर्मकर्तृत्वविरोधात्। यदि विषयग्रहणे कर्तृतयात्मा न प्रकाशते, तदा स्वपरवेद्ययोरनतिशयः स्यात्।

अथोच्यते ग्राहकतयाऽनवभासेऽपि आत्मपरवेद्ययोरतिशयः सिध्यत्येव। तथाहि—स्वसमवेतज्ञानजननमेव स्ववेद्यस्यातिशयः, परसमवेतज्ञानजननमेव परवेद्यस्य। यथा यस्यैव गमनं तक्षणं स्पन्दनं तस्यैव देशान्तरप्राप्तिः, नास्पन्दनवतः; अथ स्वपरसंबन्धिज्ञानजननव्य-

वस्थैव कथमवगम्यत इति चेत्,स्वकीयपरकीयेन्द्रियार्थसन्निकर्षादिज्ञानहेतुसामग्रीभेदेन सुखमवगन्तुं शक्यते ।

ननु ग्राहकस्यापि तत्सामग्र्यन्तर्भूतत्वेनावगमप्रसङ्गः; नैवम्, इन्द्रियादिवदनवगतस्यापि सत्तयापि कारणत्वसंभवात्। विषयबोध एवात्मबोध इति च भ्रान्तभाषितम्, नह्यन्यस्य बोधेनान्यस्य सिद्धिः, अतिप्रसङ्गात्।

किञ्च संविदधीना च सकलभावव्यवस्थासिद्धिः, सा विषयप्रकाशकाले न प्रकाशते, किमुत पुनस्तदाश्रयस्यात्मनः प्रकाशे ।

यत्तु घटमहं जानामीति विषयप्रकाशकाले सर्वत्र नियमेन त्रितयं प्रकाशत इत्युच्यते, तदपि सर्वलोकविरुद्धम्, घटोऽयं पटोऽयमिति विषयमात्रस्यैव प्रकाशनं सार्वत्रिकम्, यत्तु क्वचित् ज्ञानव्यवहारः, स प्राकट्याद्यनुमितज्ञाननिबन्धनः प्रकाशः। ज्ञातृव्यवहारस्तु मानसप्रत्यक्षहेतुक इति न विषयबोधादात्मसिद्धिः ।

अपिच यदि घटमहं जानामीति व्यवहारादात्मसिद्धेर्विषयज्ञाननिबन्धनत्वम्, तर्हि चाक्षुषं रूपं श्रावणः शब्द इत्यादीन्द्रियविशिष्टव्यवहाराच्चक्षुरादिसिद्धिरपि रूपादिज्ञानात् स्यात् ।

अथ तत्रानुमानसिद्धचक्षुरादिनिबन्धनश्चाक्षुषादिव्यवहारः, तर्ह्यत्रापि ज्ञानान्तरनिबन्धन इति तुल्यचर्चः। न चैकस्य कर्मकर्तृभावविरोधः, रूपभेदादपि तदुपपत्तेः, चेतनत्वादिरूपेण ग्राह्यत्वं ज्ञातृरूपेण ग्राहकत्वमिति ।

अत्रोच्यते—सर्वविषयबोधे आत्मनोऽहमिति प्रतीतिरास्थेया;अन्यथा मयेदं विदितमिति प्रतिभासाभावप्रसङ्गात्। भवतिच विषयवित्तौ मयेदं विदितमिति सर्वेषां सर्वत्र प्रतिभासः। तदनवभासे स्वपरवेद्ययोरनतिशयो न स्यात्। अस्तिच वैलक्षण्यं स्वरूपतः कार्यतश्च। स्ववेद्यं तु स्वप्रतियोगितया प्रकाशते,परवेद्यं तु परप्रतियोगितया। यथा स्ववेद्यः स्वव्यवहारः कार्यम्, परवेद्यः परव्यवहारः, योऽयं स्ववेद्यस्य परवेद्यादतिशयः सोऽसति स्वभावे नोपपद्यत इत्यर्थापत्तिः ग्राहकसिद्धौ प्रमाणम् ।

नन्वतिशयोऽन्यथाप्युपपद्यते। स्वसमवेतज्ञानोत्पत्तिरेव स्ववेद्यस्य परवेद्यादतिशयः, यथा यस्यैव गमनं तस्यैव देशान्तरप्राप्तिरिति, तन्न; यदि

स्वसमवेतज्ञानाद्वेद्यमात्ममेव ज्ञानम्,तदा ज्ञाताद्विषयादज्ञातस्य सोऽतिशयो भवतु, न परज्ञानात् स्वज्ञानस्य, यदा पुनः स्वसमवेतज्ञान आत्मनोऽपि-प्रतीतिरस्ति, तदा स्ववेद्यस्य परवेद्याद्रूपवैलक्षण्यं कार्यवैलक्षण्यं चोपपद्यते ; अभातस्य व्यवहारानुपपत्तेः । नच वास्तवज्ञानसमवायमात्रादसाधारण्या; [ यम् ) व्यभिचारात्, नहि स्वकीयेन दीपेन स्वस्यैव प्रकाशो न परस्येति नियमः ।

यत्तु विषयमात्रमेव प्रथते, व्यवहारोऽपि तस्यैव, आत्मव्यवहारस्तु न विषयग्रहणनियत इति, तन्न, यत्र घटमहं जानामीति आत्मव्यवहारः सम्प्रतिपन्नः, तत्रापि नात्मविषयज्ञानादहंव्यवहारस्योपपत्तिः, आत्म-विषयज्ञानस्य शशविषाणायमानत्वात् । नचासिद्धेनान्यथोपपत्तिर्वक्तुं शक्यते । अतस्तत्रापि विषयबोधादेवाहं व्यवहार इति वक्तव्यम् । एवंच सति यत्र विषयमात्रव्यवहारः घटोऽयमिति, तत्रापि विषयज्ञानादेव कर्तृतया आत्मा मे ज्ञात इति,यदि परं व्यवजिहीर्षाभावादात्मनि संविदि व्यवहारो न जातः । नच ज्ञातस्य सर्वस्य व्यवहारनियमः, निर्विकल्पादौ-व्यभिचारात् । अतो विषयबोधादेवात्मा च साभासोऽङ्गीकर्त्तव्यः ।

किञ्च यद्यर्थमात्रस्यैव ज्ञानम्, न ज्ञानज्ञात्रोः, तदैवं प्रतीतिः स्यात् । घटस्तावदयं ज्ञायते, न वेति न विद्मः, मम वा प्रतिभासते परस्यवेत्यपि नविद्म इति । नच तथा दृश्यते ।

यत्तु चाक्षुषं रूपमित्यादिप्रतीतिव्यवहाराभ्यां चक्षुषोऽपि विषयज्ञानेन प्रतीतिप्रसङ्ग इति, तदयुक्तम्, तथाविधप्रतीतिनियमाभावाच्चक्षुराद्यनु-मानज्ञानपूर्वकत्वमेव निश्चीयते । अत्रतु ज्ञानान्तरमेव न संभवति, व्यवहारोऽपि नियत इत्युक्तम् । नच मानसप्रत्यक्षेणात्मविषयज्ञानं भवति, एकस्यैव कर्तृकर्मभावविरोधात् । नच रूपभेदात्कर्तृकर्मभावोपपत्तिः, निरंशत्वात् ग्राहकैकरूपत्वाच्चात्मनः । द्रव्यादिरूपत्वं तु नात्मन एव ।

ननु क्रियाजन्यफलभागित्वं हि कर्मत्वम्, यथा गमनजन्यफलभागिनो ग्रामस्य, अत्रापि संवेदनक्रियाजन्यफलं भासनं व्यवहारो वा, तदुभयमप्यात्मन्यभ्युपगतमेव, अतो न कर्तृत्वम्; नचैकस्य कर्मकर्तृ-भावः क्वचिदपि दृष्टः । तस्मादात्मविषयमात्मकर्तृकमेव किमपि ज्ञानं-शशविषाणतुल्यमेव ।

किञ्च घटमहं जानामीति वर्तमानप्रतीतिव्यवहारौ दृश्येते; तत्र भवतां ज्ञानस्य क्षणिकत्वेन स्वानुमानकालेऽतीतत्वात् अज्ञासिषमिति भूतप्रतीतिव्यवहारावेव स्याताम्; न वर्तमानप्रतीतिव्यवहारौ।

किञ्चानुमानादप्यात्मनो ग्राहकतया सिद्धिः; घटमहं वेद्मीत्यात्मनो ग्राहकतया भानं सर्वेषां संमतमेव। तदिदं ग्राहकतया भानम्, विषयवित्त्यधीनम्, भानत्वाद्वित्तिवेद्यभानवत्; वित्तेश्च विषयवित्त्यधीनत्वं साधितमेव।

अपिचात्मसाधिका संवित्, स्वाश्रयव्यतिरिक्तकर्मिका, सकर्मकक्रियात्वात्, पाकादिवत्; घटमहं जानामीत्यात्मनो व्यवहारः, घटज्ञाननिबन्धनः, तदनन्तरमुपजायमानत्वात्, घटव्यवहारत्वात्, आत्मविषयज्ञानानन्तरमुपजायमानत्वात्। तदनन्तरमुपजायमानत्वमसिद्धमिति चेन्न; आत्मविषयज्ञानस्यैव शशविषाणतुल्यत्वादसिद्धिरन्यथासिद्धिर्वा वक्तुं न शक्यते।

किञ्च विवादाध्यासितात्मस्वरूपसिद्धिर्विषयानुभवनिबन्धना, आत्मस्वरूपसिद्धित्वात्; जाग्रत आत्मस्वरूपवत्; यथा सुषुप्तिकान्ते आत्मस्वरूपसिद्धिर्नास्ति, प्रबोधदशायां विषयानुभवदर्शनादात्मस्वरूपसिद्धिर्निश्चीयते तद्वदित्यर्थः। अतस्सिद्धम्—

"बुद्धीन्द्रियशरीरेभ्यो भिन्न आत्मा विभुर्ध्रुवः।
नानाभूतः प्रतिक्षेत्रमर्थवित्तिषु भासते॥", इति॥

---

इति नन्दीश्वरश्वरस्य प्रभाकरविजये
आत्मनिरूपणप्रकरणम्।

## (२०) व्याप्तिसमर्थनम् ॥

इदानीं सकृद्दर्शनगम्या व्याप्तिरिति प्रतिपाद्यते । संयुक्ताविमावग्निधूमाविति प्रतिपत्तिरस्तीति निर्विवादम् । अत्रच देशकालाभ्यां संयोगेन च विशिष्टावग्निधूमौ प्रतीयेते ; गुणानां द्रव्यपरतन्त्रस्वभावत्वात् । तदुक्तम्—गुणानां च परार्थत्वादिति । तच्च शब्दानामेव पदार्थान्वयविषयमिति चेन्न; तस्यापि प्रत्यक्षमूलत्वात् । लोके तु येन प्रकारेण पदार्थानां परस्परान्वयः प्रत्यक्षादिभिर्निश्चितः, तथैव शब्दो ब्रवीति, इतरथा वेदवाक्येषु यथाश्रुतार्थपरित्यागेन लक्षणया गौण्या वा वृत्याऽन्यथावर्णनं क्रियमाणमयुक्तं स्यात् । अतोऽन्वयमात्रविषयो न्यायः, न शाब्दविषयः । संयोगस्य च देशकालयोश्च द्रव्यविशेषणत्वेन प्रतीतौ स्थितायां संयुक्तावग्निधूमौ इदानीमग्निधूमावित्यन्वयो भवति, नेदानीमग्निधूमयोः संयोग इति; इतरथा संयोगस्य देशकालविशेषणत्वं किमिति नाश्रीयते ? ततश्च यावद्द्रव्यभावितया संयोगस्य प्रतीतत्वात् यत्र धूमस्तत्राग्निसंयोग इत्यनौपाधिक एव धूमस्याग्निसंबन्धः सकृद्दर्शन एव सिद्धः । संयोगस्य च देशकालावच्छेदे इदानीमग्निधूमयोः संयोग इत्यन्वयो भवति । ततश्च देशान्तरे कालान्तरे वा संयोगस्यागृहीतत्वाद्भूयोदर्शनमपेक्षणीयम् । नच तथाऽन्वय इत्युक्तम् ।

ननु संयुक्ताविमाविति प्रतिपत्तावेवं स्यात्, अयमनयोः संयोग इति प्रतिपत्तौ विपरीतं स्यात् ? नैवम्; अस्तु तावदयमनयोः संयोग इत्यपि प्रतीतिः, तत्र न व्याप्तिग्रहणमस्माभिरुच्यते; देशकालावच्छेदेन संयोगस्य ग्रहणात्, किन्तु संयुक्ताविमाविति हि प्रतिपत्तावेवानौपाधिकत्वग्रहणम् । एतदेवाभिप्रेत्योक्तं प्रकरणपञ्चिकायाम्— "संयुक्ताविमाविति हि प्रतिपत्तिः, न पुनरयमनयोः संयोगः" इति ।

ननु धूमव्यक्तिविशेषेण संयोगस्यान्वयात् व्यक्त्यन्तरस्य च व्याप्त्यनुपगमः, नैवम्, धूमजात्युपलक्षितस्य विशेषस्यान्वयोपगमात् । व्यक्तिभेद उपाधिरिति शङ्कायां व्यक्त्यन्तरेऽपि संयोगदर्शनेनैव शङ्कानिवृत्तिः ।

ननु धूमजातेरपि व्यक्तिमात्रेणैवान्वयः, नैवम्; यदि सामान्यमन्तरेणापि व्यक्तेर्ग्रहणमस्ति, तदा स्यात्सामान्यस्य गुणभावः, न च सामान्यमन्तरेण कदाचिदपि व्यक्तेः प्रतीतिः। नहि रूपशून्या काचिदपि रूपिबुद्धिरस्तीत्युक्तत्वात्। अतो जातिविशिष्टस्यैव प्राधान्यात्, तेन संयोगस्यान्वयात् सर्वधूमवता सकृदेवाग्निसत्ता गृहीता भवति। तदुक्तम्—तथा च सति धूमसत्तैव देशान्तरे कालान्तरे वा प्रमाणमपेक्षते, न च तस्यां सत्यामग्निसंयोग इति। एवं गृहीतेऽप्यनौपाधिकत्वे यद्युपाधिशङ्का कस्यचित्स्यात्, तदा भूयोदर्शनादेव शङ्कानिरासमात्रं क्रियते, न व्याप्तिग्रहणम्।

ननूपाध्यद (र्श) नेऽपि शङ्कोदयादेव दर्शनमपि शङ्कितमेव स्यात्, एवं तर्ह्यतिप्रसङ्गः, घटादिग्रहणेऽपि बाधकशङ्कया घटादिग्रहणस्याप्यनिश्चयप्रसङ्गः।

नन्वग्निना संयोगस्य सकृद्दर्शनेऽन्वयात् सकृद्दर्शनेनाग्निना धूमानुमानं प्रसज्यते, नैवम्, सकृद्दर्शनेनैवाग्नेर्धूमसंयोगोऽप्यनौपाधिक इति प्राप्तम्, उत्तरकालं तु आर्द्रेन्धनाद्युपाधिदर्शनादौपाधिकत्वनिश्चयः। न चोपाधिदर्शनादौपाधिकत्वनिश्चये उपाध्यदर्शनेऽपि तत्प्रसङ्गः; अतः सकृद्दर्शनादेव व्याप्तिग्रहः, न च सकृद्दर्शनस्याशक्तौ भूयोदर्शनस्यापि शक्तिः; भूयोदर्शनानामपि प्रत्येकं सकृद्दर्शनत्वात्। न च दर्शनानां भूयस्त्वं ग्राहकम्। रत्नतत्त्वग्रहणे तथा दृष्टमिति चेत्, नैवम्, न तत्रापि भूयोदर्शनस्य ग्राहकत्वम्, किन्तु विवेचकाकारग्रहणे प्रवृत्तस्तस्य चातिसौक्ष्म्यान्मनस्समवधानाद्यभावाच्च न तत्त्वं ग्रहीतुं प्रभवति, केवलं रत्नमात्रमेव गृह्णाति, एवमनेकदर्शने जाते मनस्समवधानादिसामग्रीसंभवात् अर्थादेकदा तत्त्वं गृह्णाति। अतो न भूयोदर्शनस्य तत्त्वग्रहण उपयोगः। भूयोदर्शनस्य कारणत्वाभ्युपगमे इन्द्रियसंबन्धादिवत्सर्वेषां भूयोदर्शननियमोऽपि स्यात्। न च तथा दृश्यते, एकस्स कृद्दर्शनादेव तत्त्वं गृह्णाति, अपरस्तु शतदर्शनात्। अतो न भूयोदर्शनाद्रत्नतत्त्वग्रहणम्।

यत्तूक्तं सकृद्दर्शनस्यासामर्थ्येऽप्येकस्य दर्शनजातीयस्यैव सामर्थ्यं संभवति, तथा एकस्य वृश्चिकदंशस्य मरणहेतुत्वं एकस्य (?) खर्जूरस्य पिण्डवत्त्वमित्यादि, तदप्ययुक्तम्; तत्रापि भ्रान्तिभेदेन देशभेदेन वा सा-

मर्थं कल्पनीयम् , नत्वेकविधस्यैव शक्तिद्वयम् । अतः सकृद्दर्शनगम्या व्याप्तिरिति ।

इति व्याप्तिसमर्थनं
समाप्तम्

## (२१) अथ भेदाभेदनिरासप्रकरणम् ॥

सम्प्रति भेदाभेदौ निराक्रियेते । केचिज्जातिव्यक्ति गुणगुण्यवयवाव-यव्यादीनां भेदाभेदौ वर्णयन्ति । तथाहि—जातिव्यक्त्योर्भेदस्तावत्सर्वजनसिद्धः । अभेदोऽपि तयोः प्रतीयते । खण्डो गौरित्यत्र प्रतीतौ तावत्खण्डतादात्म्येन गोत्वं प्रतीयते; अन्यथा खण्डश्च गौश्चेति प्रतीतिः स्यात्, खण्डस्य गोत्वमिति वा । न कदाचिदपि तथा प्रतिपत्तिः। अतः खण्डतादात्म्येन गोत्वस्य प्रतीतित्वात्खण्ड एव गौरित्यभेदः प्रतीतः । तथाऽत्रैव प्रतीतौ खण्ड एव गौः, न मुण्ड इति व्यवहारात्, खण्डतादात्म्येन प्रतिपन्नस्यैव मुण्डाद्भेदोऽवसीयते । तथा मुण्डो गौरित्यत्र मुण्डतादात्म्येन प्रतिपन्नस्य सामान्यस्य न खण्ड इति व्यावृत्तिदर्शनाद्भेदोऽप्यवसीयते ।

एतदुक्तं भवति—यस्यां व्यक्तौ तादात्म्येन सामान्यस्य प्रतीतिः, तस्यां व्यक्तो तया प्रतीत्या तदभेद एव प्रतीतः ।

अथास्यामेव प्रतीतौ भेदस्य विषयीकर्तुमशक्यत्वम्, किन्तु व्यक्त्यन्तराद्भेदः प्रतीयते, अतो जातिव्यक्त्योः प्रत्यक्षेणैव भेदोऽभेदश्च प्रतीतः । नच भेदाभेदावेकत्र संभवतः, विरुद्धत्वात् , सदसत्त्ववदिति वाच्यम्; विरोधाभावात्, ययोरेकत्र प्रतीतिर्नास्ति, तयोरेव विरुद्धत्वम्, यथा सदसतोः । तदुक्तम्—

'प्रतीयते चेदुभयं विरोधः कोऽयंमुच्यते ।" इति । प्रतीतयोरपि विरोधेऽङ्गीक्रियमाण एकस्यैव सामान्यस्य नानाभूतासु व्यक्तिषु युगपत्परिसमाप्य वृत्तिर्नाङ्गीक्रियेत । यदि प्रतीतिबलादङ्गीक्रियते, तर्हि भेदाभेदयोरपि समानमिति तुल्यचर्चः ।

किञ्च प्रथमव्यक्तिदर्शने तावदेव प्रतीयते, तदानीमनुवृत्ताकारस्य न प्रतीतिरेवाङ्गीकृता सर्ववादिभिः । किंचाभेदप्रतीतिर्नास्तीति यो वदति,

तस्य सर्वलोकविरोधः । सर्वेषामेव विस्फारिताक्षाणां पुरतः स्थितेषु वस्तुषु प्रथममेकाकारेणैव प्रतीतिः । अतः सर्वेषु वस्तुषु सर्वेषां प्रथममभेदप्रतीतिरेव समुत्पद्यते, पश्चाद्भेदप्रतीतिः । अतोऽबाधितविषयप्रतीतिसिद्धौ भेदाभेदौ नापह्नवमर्हतः ।

किञ्चायं गौरिति सामानाधिकरण्येन प्रतीतिरस्तीति निर्विवादम् । तत्रात्यन्तभिन्नयोर्गवाश्वयोः यथा सामानाधिकरण्यं न दृश्यते, तथाऽत्यन्ताभिन्नजात्यादिस्वरूपप्रतिपत्तौ न च दृश्यते । अतोऽत्यन्तभिन्नादत्यन्ताभिन्नाच्च व्यवृत्तं सामानाधिकरण्यं भेदाभेदौ कल्पयति । न च वाच्यमत्यन्तभिन्नयोरपि प्रकारप्रकारितया प्रतीतत्वेन सामानाधिकरण्योपपत्तिरिति; प्रकारप्रकारित्वस्यैवात्यन्तभिन्नयोरत्यन्ताभिन्नयोश्चादर्शनात्तदपि भेदाभेदमेव कल्पयति । नह्यत्यन्तभिन्नयोर्दण्डपुरुषयोः प्रकारप्रकारित्वं सामानाधिकरण्यं वा दृश्यते । न च समवायनिबन्धनं सामानाधिकरण्यम्; समवायसंबन्धस्यैव प्रमाणाभावेनानभ्युपगमात् । अतो येन पिण्डेनाभिन्नं सामान्यं प्रतीयते, तदपेक्षया भिन्नमेव पिण्डान्तरापेक्षयाऽभिन्नम् । यथा एक एव देवदत्तः पुरुषान्त क्षया दीर्घः प्रतीयते, स एवान्यापेक्षया ह्रस्वो भवति; तथा भेदाभेदावप्येकप्रतीतिबलसिद्धत्वान्नापह्नवमर्हतः । तदुक्तम्—

सर्ववस्तुषु बुद्धिर्या व्यावृत्त्यनुगमात्मिका ।
जायते द्व्यात्मकत्वेन विना सा च न सिद्ध्यति ॥ इति ॥

अत्रोच्यते—ययोर्जातिव्यक्त्योर्भेदः प्रतीतः,तयोरेवाभेदः प्रतीयत इति दुर्घटं वचः। तथाहि—अनुवृत्ताकारस्वभावा जातिः प्रतीता, व्यावृत्ताकारस्वभावा च व्यक्तिः । अत आकारद्वयव्यतिरेकेण तयोरभेदकं नामाकारान्तरं न पश्यामः । आकारान्तरभासेऽपि सोऽपि तृतीय एवाकारः स्यात्, नतु जातिजातिमतोरभेदावभासः सः , यथायमनयोः संयोग इति प्रतीतौ संयोगिद्वयाकारव्यतिरेकेण संयोगाकारस्तृतीयः ।

ननु यथा संयोगिनोराकारः संयोगाकारः, एवं जातिव्यक्त्योरभेद इति प्रतीतावभेदाकारे जात्याद्याकारो न स्यात् । अथोच्येत न वयं जातिव्यक्त्योरभेद इत्यभेदप्रतिपत्तिमभ्युपगच्छामः, किन्तु भिन्नाकारेण प्रतिप-

त्तिमेव, नहि जातिव्यक्ती एकाकारेण कदाचित्प्रतीयेते। अतो न तृतीयाकारप्रसङ्ग इति, तन्न; भिन्नाकारेण प्रतीतयोः कदाचिदेकाकारप्रतीतिरसिद्ध व, तथाप्युच्यते, सचायमेकाकारेण यदि तयोः संबन्धित्वेन प्रतीतः, तदा संयोगवत्तृतीयाकारः स्यादिति दू...[?] प्रतीतिर्नास्ति केवलमेकाकारप्रतीतिरेव, तर्हि जातिव्यक्त्योः का वार्ता? वस्त्वन्तर तीतिरेव भवतु को दोषः?

अथ निरूप्यमाणवस्त्वन्तरस्यादर्शनात्तयोरेव आकार इत्यङ्गीक्रियेत, तर्हि भिन्नाकारेण प्रतिपन्नयोरेकाकारप्रतीतिर्भ्रान्तिरेव स्यात्; अन्यथावस्थितस्यान्यथाप्रतिभानात्।

अथ प्रतीतत्वादेकाकारस्य तयोरेकत्वमप्यस्तीति मन्यसे, तर्हि नाना भूतानामपि वृक्षाणामेकं वनमित्येकत्वमभ्रान्तमेव स्यात्। अथासीदत्तां नानावृक्षानुसन्धानात् एकं वनमित्यननुसन्धानाच्चैकत्वं बाधितम्, अतो वनप्रत्ययो भ्रान्त इति चेन्न; तर्ह्यत्रापि भेदप्रतीतिकालेऽभेदस्याननुसन्धानादभेदस्य भ्रान्तत्वं स्यात्, तत्रापि वनप्रत्ययकाले नानात्वानुसन्धानं नास्ति, नानात्वानुसन्धानकाले एकत्वानुसन्धानम्।

अथ भेदो नास्तीति बाधकज्ञानं न दृश्यते, अतो न भ्रान्तत्वमिति, तर्ह्यत्रापि नेदमेकं वनमिति बाधकज्ञानं नास्ति, नानात्वानुसन्धानादर्थादेकत्वस्य बाध इति। अथ दूरत्वादपि दोषसंभावनया वनप्रत्ययस्य भ्रान्तत्वमिति, तर्ह्यत्राप्यतिनिरन्तरतया भेदभ्रम इति सर्वं समानमन्यत्राभिनिवेशात्।

किञ्चास्तु तावदेकाकारप्रतिभासः; अस्तु च तस्याभ्रान्तत्वम्; तथाप्याकारप्रतिभासो जातिः; जातिभागस्य पिण्डभागस्य वा द्वितीयावभास एव स्यात्, नतु जातिजातिमतोरभेदावभासः। अथोच्येत न विलक्षणाकारेण वस्तुद्वयप्रतीतिरेव भेदप्रतीतिः *

---

इति नन्दीश्वरस्य प्रभाकरविजयः
समाप्तः

---

* मातृकायामेतावदेवोपलभ्यते। तथापि विज्ञायतेऽधिकमपि प्रभाकरविजयो वर्तत इति। यतोऽपरिपूर्णमेवेदं प्रकरणं दृश्यते।

| | मूल्यम् साधारणानाम् | सदस्यानाम् |
|---|---|---|
| कालीतत्त्वम्—सटीकानुवादम् | ॥৵० | ॥० |
| मञ्जरीसङ्गीतम्— | ।৵० | ।० |
| मुक्तिवादः—गदाधरभट्टाचार्य्यविरचितः सटीकान्वय-भाष्यानुवादसहितः | २৲ | १॥० |
| দুর্গোৎসবতত্ত্বম্—রঘুনন্দনভট্টাচার্য্যকৃতম্ শারদীয়দুর্গোৎসবপ্রমাণপ্রয়োগতত্ত্বরূপম্ | ১।০ | ১৲ |
| पितृदयिता—अनिरुद्धभट्टकृता सामवेदीय-सन्ध्याश्राद्धादिपद्धतिरूपा | २।० | २৲ |
| দুর্গোৎসবনিবন্ধকদম্বম্—দুর্গোৎসব-বিবেকাদিগ্রন্থপঞ্চকাত্মকম্ | ॥০ | ।৵০ |
| कारकोल्लासः—भरतमल्लिककृतः सोदा-हरणकारकनिर्णयरूपः | ৵० | ৵० |
| ऋग्वेदभाष्योपक्रमणिका—सायणकृता आङ्गलभाषाटिप्पणसमेता | ॥० | ।৵० |
| গ্রহযাগতত্ত্বম্—রঘুনন্দনভট্টাচার্য্যকৃতম্ | ।৶০ | ।৴০ |

प्रभाकरविजयः—नन्दीश्वरविरचितः प्रभाकरसम्प्रदायानुसारि-मीमांसाग्रन्थः ।

मुद्राप्यमाणग्रन्थाः—

प्रशस्तपादभाष्यम्—जगदीशसूक्तिसहितम्, सूक्तिदीपिकया भाषाभाष्येण च समलङ्कृतम् ।

यात्रातत्त्वम्—रघुनन्दनभट्टाचार्य्यविरचितम् ।

तीर्थतत्त्वम्—रघुनन्दनभट्टाचार्य्यविरचितम् ।

आनन्दलतिका—सपत्नीक-कृष्णनाथविरचितं काव्यम् ।

पवनदूतम् —धोयीकविकृतम् ।

मुद्रापणार्थं गृहीता ग्रन्थाः—

छान्दोग्यमन्त्रभाष्यम्—गुणविष्णुकृतम् ।

प्रमेयरत्नावली—बलदेवविद्याभूषणकृता ।

समन्त्रसारवृत्तिः—अनुपनारायण शिरोमणि कृता ।

ऋक्प्रातिशाख्यम्—शौनककृतम् ।

VIDYODAYA PRESS, CALCUTTA

# संस्कृतसाहित्यपरिषद्ग्रन्थमाला

| | मूल्यम् साधारणानाम् | सदस्यानाम् |
|---|---|---|
| कालीतन्त्रम्—सटीकानुवादम् | ॥৶০ | ॥০ |
| शङ्करीसङ्गीतम्— | ।৶০ | ।০ |
| मुक्तिवादः—गदाधरभट्टाचार्य्यविरचितः सटीकाद्वय-भाषानुवादसहितः | २৲ | १॥० |
| দুর্গোৎসবতত্ত্বম্—রঘুনন্দনভট্টাচার্য্যকৃতম্ শারদীয়দুর্গোৎসবপ্রমাণপ্রয়োগতত্ত্বরূপম্ | ১।০ | ১৲ |
| पितृदयिता—अनिरुद्धभट्टकृता सामवेदीय-सन्ध्याश्राद्धादिपद्धतिरूपा | १।० | १৲ |
| দুর্গোৎসবনিবন্ধকদম্বম্—দুর্গোৎসব-বিবেকাদিগ্রন্থপঞ্চকাত্মকম্ | ॥০ | ।৶০ |
| कारकोल्लासः—भरतमल्लिककृतः सोदा-हरणकारकनिर्णयरूपः | ৵० | ৵० |
| ऋग्वेदभाष्योपक्रमणिका—सायणकृता आङ्गलभाषाटिप्पणसमेता | ॥।० | १৵० |
| গ্রহযাগতত্ত্বম্—রঘুনন্দনভট্টাচার্য্যকৃতম্ | ।৶০ | ৵০ |

प्रभाकरविजयः—नन्दीश्वरविरचितः प्रभाकरसम्प्रदायानुसारि-मीमांसाग्रन्थः ।

## मुद्राप्यमाणग्रन्थाः—

प्रशस्तपादभाष्यम्—जगदीशसूक्तिसहितम्, सूक्तिदीपिकया भाषाभाष्येण च समलङ्कृतम् ।

यात्रातत्त्वम्—रघुनन्दनभट्टाचार्य्यविरचितम् ।

तीर्थतत्त्वम्—रघुनन्दनभट्टाचार्य्यविरचितम् ।

आनन्दलतिका—सपटीक-कृष्णनाथविरचितं काव्यम् ।

पवनदूतम् —धोयीकविकृतम् ।

## मुद्रापणार्थं गृहीता ग्रन्थाः—

छान्दोग्यमन्त्रभाष्यम्—गुणविष्णुकृतम् ।

प्रमेयरत्नावली—बलदेवविद्याभूषणकृता ।

समञ्जसावृत्तिः—अनुपनारायण शिरोमणि कृता ।

ऋक्प्रातिशाख्यम्—शौनककृतम् ।

VIDYODAYA PRESS, CALCUTTA.